# ॥ पार्षदसूत्रम् ॥

( ऋग्वेदस्य प्रातिशाख्यम् )

## ॥ भगवता शौनकमहामुनिना प्रोक्तम् ॥

चट्टोपाध्यायावसथभट्टाचार्यान्वयेन
सामश्रमीत्युपनामश्रीसत्यव्रतशर्म्मणा सम्पादितम् ।


कलिकाता—सत्ययन्त्रतः

( १९/१, चीचिस् लेन )

॥ श्रीमहेन्द्रनाथसरकारेण मुद्रितं सम्पादकेनैव प्रकाशितम् ॥

॥ संवत् १९५२ ॥

॥ अथ ॥

# ॥ पार्षदसूत्रम् ॥

॥ अथ प्रथमाध्याये प्रथमः पटलः ॥

( मङ्गलाचरणम् )

ॐ । परावरे ब्रह्मणि यं सदाहु-
र्वेदात्मानं वेदनिधिं मुनीन्द्राः ।
तं पद्मगर्भं परमं त्वादिदेवं
प्रणम्यर्चां लक्षणमाह शौनकः ॥ १ ॥

( तत्रायं प्रथमः खण्डः )

अकारर्कारावि उ ए ओ ऐ औ पदाद्यन्तयोर्न ऌकारः स्वरेषु । आकारादीन् दीर्घरूपान् द्वितीयान् ह्रस्वेषु पञ्चस्वपि तानि सन्ति । कखौ गघौ ङ चछौ जझौ ञ टठौ डढौ ण तथौ दधौ न । पफौ बभौ म यरलवा हशषसा ×क ⨯पा इति वर्णराशिक्रमस्य ॥१॥

( अथ द्वितीयः खण्डः )

अष्टौ समानाक्षराण्यादितस्ततश्चत्वारि सन्ध्यक्षराण्युत्तराणि । एते स्वरा ईपरो दीर्घवत् प्लुतो ऽनुस्वारो व्यञ्जनं वा स्वरो वा । सर्वः शेषं व्यञ्ज-

नान्त्यस्तेषा माद्याः स्पर्शाः पञ्च ते पञ्चवर्गाः। चतस्रोऽन्तस्थास्तत उत्तरेऽष्टा ऊष्माणोऽन्त्याः सप्त तेषा मघोषाः। वर्गेवर्गे च प्रथमावघोषौ युग्मौ सोष्माणा वनुनासिकोऽन्तः। तस्मादन्य मवसाने तृतीयं गार्ग्यः स्पर्शप्रथमं शाकटायनः। ओजा ह्रस्वाः सप्तमान्ताः स्वराणा मन्ये दीर्घा उभये त्वक्षराणि। गुरूणि दीर्घाणि तथेतरेषां संयोगानुस्वारपराणि यानि। अनुस्वारो व्यञ्जनं चाक्षराङ्गं स्वरान्तरे व्यञ्जनान्युत्तरस्य। पूर्वस्यानुस्वारविसर्जनीयौ संयोगादिर्वा च परक्रमे द्वे ॥ २ ॥

( अथ तृतीयः खण्डः )

मात्रा ह्रस्वस्तावदवग्रहान्तरं द्वे दीर्घस्तिस्रः प्लुत उच्यते स्वरः। अधःस्विदासी३ दुपरिस्विदासी३ दर्थप्लुतिभीरिव विन्दती चिः। स्वरभक्तिः पूर्वभागक्षराङ्गं द्राघीयसी सार्द्धमात्रेतरे च। अर्द्धो वान्यारक्तसंज्ञो ऽनुनासिकः संयोगस्तु व्यञ्जनसन्निपातः। कण्ठ्यो ऽकारः प्रथमपञ्चमौ च द्वा ऊष्मणां केचिदेता उरस्यौ। ऋकारल्कारावथ षष्ठ ऊष्मा जिह्वामूलीयाः प्रथमश्चवर्गः। तालव्यावेकारचकारवर्गा विकारैकारौ यकारः शकारः। मूर्द्धन्यौ षटकारवर्गौ

दन्तमूलीयस्तु तकारवर्गः। सकाररेफलकाराश्च रेफं वर्त्स्य मेके शेष ओष्ठ्योपपाद्यः। नासिक्यं नासिक्य-यमानुस्वारा इति स्थानान्यच यमोपदेशः॥ ३ ॥

( अथ चतुर्थः खण्डः )

जिह्वामूलं तालु चाचार्य आह स्थानं डकारस्य तु वेदमित्रः। द्वयोश्चास्य स्वरयोर्मध्य मेत्य सम्पद्यते स डकारो ळकारः। ळ्हकारता मेति स एव चास्य ढकारः सन्नूष्मणा संप्रयुक्तः। इळा साळ्हा चात्र निदर्शने द्वे वीड्वङ्ग इत्येतदवग्रहे तु। न्यायैर्मिश्रान-पवादान् प्रतीयात्सर्वं हि शास्त्रं प्रति कण्ठ मुक्तम्। स्थानप्रश्नेषोपदेशे स्वराणां ह्रस्वादेशे ह्रस्वदीर्घौ सवर्णौ। असावमु मिति तद्भाव मुक्तं यथान्तरं पादवच्चैव प्रैषान्। प्रष्कानार्षादितिकरणात्पदान्तां-स्तद्युक्तानां तेन ये संहितानाम्। सामवशा इति चैवापवादान् कुर्वन्ति ये सम्पदं पादवृत्तयोः। अप्लुत्याम्नाये पदवच्च पद्यान्तेनतोपाचरितक्रम-स्वरान्॥ ४ ॥

( अथ पञ्चमः खण्डः )

अष्टावाद्यानवसाने प्रगृह्यानाचार्या आहुरनु-नासिकान् स्वरान्। तस्मिन्नाचे शाकला दर्शय-

न्याचार्यशास्त्रापरिलोपहेतवः । ऋकारादयो दश नामिनः स्वराः पूर्वोऽनन्त्यानतिषु नम्य मुत्तरम् । सहोपधो रिफित एकवर्णवद्विसर्जनीयः स्वरघोषवत्परः । ओकार आमन्त्रितजः प्रगृह्यः पदं चान्यो पूर्वपदान्तगश्च । षष्ठादयश्च द्विवचोतभाजस्त्रयो दीर्घाः साप्तमिकौ च पूर्वौ । अस्मे युष्मे त्वे अमी च प्रगृह्या उपोत्तमं नानुदात्तं न पद्यम् । उकारश्चेतिकरणेन युक्तो रक्तो पृक्तो द्राघितः शाकलेन । ऊष्मा रेफो पञ्चमो नामि पूर्वौ मंहोपोवर्जं मितरो यथोक्तम् । अन्तोदात्त मन्तरचा विपर्यये स्पर्शे चोपः प्रत्यये पूर्वपद्यः ॥ ५ ॥

( अथ षष्ठः खण्डः )

प्रातर्द्वैवं भावंधराद्युदात्तं कर मुदात्त मबिभस्तदादः । स्तः प्रागाथ मेतशे कर्दिवे करपस्करत् सारविपूर्वमस्तः । स्वः स्वरितं न समासाङ्ग मुत्तमं स्वरादेशो पूर्वपदेष्ववमंहः । अनर्वचान्ते स्वरघोषवत्पर सूधर्न रेफेऽरूषामो ऽत्वान्मह्नो । वरवरावरिति चैकपादे व्यपपूर्वाण्यसमः साङ्गयोगे । पथ्या मघोनी दिवि चचसा मदे पूर्वोऽर्चिषातीत्वषामोत्तरेषु न । होतः संनितः पोतर्नेष्टः सोतः सवितर्नेतस्त्वष्टः ।

मातर्जनितर्भ्रातस्त्रातः स्थातर्जरितर्ज्ञातर्दुर्त्तः। जामातर्दुहितर्दर्त्तः प्रशास्तरवितः पितः। दोषावस्तरवस्यर्त्तः प्रयन्तश्चेंग्य मुत्तमम्। दीधरभारवरीवरद्दर्दर्दरदर्द्वरजागरजीगः। वारपुनःपुनरस्यरकस्यः सस्वरहः सनुतः सबरस्वाः ॥ ६ ॥

॥ इति पार्षदे प्रथमाध्याये प्रथमः पटलः॥

---

## ॥ अथ द्वितीयः पटलः ॥

( तत्रायं प्रथमः खण्डः )

संहिता पदप्रकृतिः पदान्तान् पदादिभिः सन्दधदेति यत्सा। कालाव्यवायेन स्वरान्तरन्तु विवृत्तिः सा स्वरभक्तिकाला। पदान्तादिष्वेव विकारशास्त्रं पदे दृष्टेषु वचनात्प्रतीयात्। पदं पदान्तादिवदेकवर्णं प्रश्लिष्ट मथानुपूर्वेण सन्धीन्। एषस्य स च स्वराश्च पूर्वं भवति व्यञ्जन मुत्तरं यदेभ्यः। तेऽन्वक्षरसन्धयो ऽनुलोमाः प्रतिलोमास्तु विपर्ययेऽत एव। तत्र प्रथमास्तृतीयभावं प्रतिलोमेषु नियन्त्यथेतरेषु। ऊष्मा परिलुप्यते चयाणां स्वरवर्जं न तु यत्र ता निपात्याः। पुर एता तितउना प्रउगं नम-

उक्तिभिः । अन्तःपदं विवृतयोऽतोऽन्याः पदसन्धिषु ॥ १ ॥ ७ ॥

( अथ द्वितीयः खण्डः )

समानाक्षरे संस्थाने दीर्घमेक मुभे स्वरम् । इकारोदय एकार मकारः सोदयस्तथा । उकारोदय ओकारं परेष्वैकार मोजयोः । औकारं युग्मयोरेते प्रश्लिष्टा नाम सन्धयः । समानाक्षर मन्तस्थाः सामकण्ठ्यं स्वरोदयम् । न समानाक्षरे स्वे स्वे ते क्षैप्राः प्राकृतोदयाः । विसर्जनीयो रिफितो दीर्घपूर्वः स्वरोदयः । आकार मुत्तमौ च द्वौ स्वरौ ताः पदवृत्तयः । ह्रस्वपूर्वस्तु सोकारं पूर्वौ चोपोत्तमात्स्वरौ । त उद्ग्राहा दीर्घपरा उद्ग्राह्यपदवृत्तयः ॥ २ ॥ ८ ॥

( अथ तृतीयः खण्डः )

ओष्ठ्ययोन्योर्भुग्नमनोष्ठ्य वकारोऽचान्तरागमः । ऋकार उदये कण्ठ्यावकारं तदुद्ग्राहवत् । उद्ग्राहाणां पूर्वरूपाण्यकारे प्रकृत्या द्वे ओभवत्येक माद्यम् । प्राच्यपञ्चालपदवृत्तयस्ताः पञ्चालाना मोष्ठ्यपूर्वा भवन्ति । अथाभिनिहतः सन्धिरेतैः प्राकृतवैकृतैः । एकीभवति पादादिरकारस्तेऽत्र सन्धिजाः । अन्तःपाद मकाराच्चेत् संहितायां लघो-

लघु । यकाराद्यक्षरं पदं वकाराद्यपि वा भवेत् । अन्याद्यपि तथायुक्त मावोन्तोपहितात्स्वः । अये-योवेव इत्यन्तैरकारः सर्वथा भवेत् ॥ ३ ॥ ९ ॥

( अथ चतुर्थः खण्डः )

व इत्येतेन चानप्रद्युचित्रः सवितैवकः । पदै-रुपहितेनैतैः सर्वैरेवोदयाः परे । अदादवर्चीजनयन्त्वा-व्यत्या अभेदयोपाष्टिरवंत्ववीरता । अमु मुक्त ममत-येनशामहा अत्रत्वचो वीरते वास्यवो रथाः । वासो वायो ऽभिभुवे कवष्यः संक्रन्दनो ऽध्रीजवनः स्वधावः । उत्सादत ऋतादः सगर्भ्यो हिरण्यशृङ्ग इति चोप-धाभिः । ये३रा रायो धमे धायिनो हिरण्ने ऽभि-दासति । जायमानो भवोग्ने यं न्रतोपोंहोतिपि-प्रति । जम्भयन्तो हि मरुतो नु भर्चीवयसे ऽविष्यन्व-युने जनिष्ट । वृत्रहत्ये वीः समरेतमाना मरुतो मदन्नभितो नवन्त ॥ ४ ॥ १० ॥

( अथ पञ्चमः खण्डः )

ब्रुवतेध्वस्त्वसे वाचि मेरपद्दधिरे ग्ना नहुषो ऽस्मत् पुरोऽभिनत् । उपतेध्नांवहहतेयंयमोदिति-र्जनुषोयात्सुवितोनुश्रियोधितावपुषेनुविशोयन्तसन्तो-ऽवद्यानिखेऽनसः । भरन्तोऽवस्युवोवोस्त्, बुभ्रो३जो-

मायिनोधमः। देवोनयत् पुरूवसोऽसुरघ्नो भूतो३-
भिश्वेतोरुषस्तेन नोद्य। येजामयस्ते रदन्नोधिवक्ता
तेऽवद्धन्ते तेऽरुणेभिः सदोधि। स्वाध्यो जनयन् धन्व-
नोऽभिमातीरग्ने यदद्ध मनसो धियो धनः। यो३-
श्वस्तेऽविदस्तपसो धिनयोऽधिपादोऽस्य यो विव्रा-
ह्मणोऽस्य योऽनयत्। सोऽस्माकं यो द्वेषोभ्योऽन्य-
कृतेभ्यस्ते भ्योकारं पयस्वन्तो मृताश्च। अन्योर्वाक्केथो
इति चोदयेषु पुचः पराके च परावतश्च॥ ५॥ ११॥

( अथ षष्ठः खण्डः )

अन्तःपादं च वयो अन्तरिक्षे वयो अस्याः श्रथयो
हेतयस्त्वयः। वो अन्धसः शयवे अश्विनोभये श्रवो
अधिसाञ्जयो जामयः पयः। प्रकृत्योतिकरणादौ
प्रगृह्याः स्वरेषु चार्ष्यां प्रथमो यथोक्तम्। सहोदयास्ताः
प्रगृहीतपादाः सर्वत्रैव त्र्यक्षरान्तास्तु नेवे। आर्ष्या
मेव सन्ध्यायकारपूर्वो विवृत्तेश्च प्रत्ययः सन्नुकारः।
उकारादौ स्वितिपूर्षेत्यकारे न चेत्तदेकाक्षरं तच्च
पूर्वम्। अद्वा सम्राज्ञी सुशमी स्वधाती पृथुज्रयी
पृथिवीषा मनीषा। अयानिद्राज्या मयेति स्वराणां
मुखेऽ परे पञ्चमषष्ठयोश्च। स्वरे पादादा उदये सचे

तिष्ठन्तं जोषं चर्षणीभ्यश्चर्षणिभ्यः। एकारान्तं मित्र-
योरस्मदीवन्नमस्युरित्युपधं चेत्यपृक्तम् ॥ ६ ॥ १२ ॥

( अथ सप्तमः खण्डः )

एकारौकारपरौ च कण्ठ्यौ लुशादर्वाग्गोतमे चाभि-
नन्त। विभ्वा विधर्त्ता विपन्या कदाया मातेत्यका-
रेऽप्यपादादिभाजि। परुच्छेपे ऽभीप्रापथेत्यकार एवाँ
अग्निमचित्रषु सा प्लुतोपधा। सचादयो या विहिता
विवृत्तयः प्लुतोपधा ता अनुनासिकोपधाः। सेदु
सास्मिन् सेमभि साभिवेगः सेद्दभवः सोपमा सौष-
धीरनु। सास्मा अरं सोतनः सेन्द्रविश्वा सेति सास्माक
मनवद्य सासि। सेदग्ने सेदग्निर्वामिष्ठं सास्मा-
केभिः सेदुग्रः समे। सैना सैनं सेमं सोदञ्चं सेमां
सोषान्त्सेशे सेदिशे। नू इत्था ते सानो अव्ये
वो अस्मे वासौ वेद्यास्याम्। धिष्ण्या मे नू अन्यताचित्
पादादौ नू इन्द्रेत्यर्वाक् ॥ ७ ॥ १३ ॥

( अथ अष्टमः खण्डः )

उदू अयान् रजेषितं धनर्चं शतर्चसं दशोण्ये
दशोण्ये। यथोह्विषे यथोचिषे दशोणिं स्वरोदयं
पिबा इमं रथोळ्ह। वीरास एतं तमू अक्रावं स्तता-
रेम प्रैष पूरोदसीमे। धन्वर्णसः स्वरपसः सचोत

प्रधीव वीळू उत सत्त्ववाजी । अश्विनेव पीवोपवस- नानां मह्नो आदित्यानुषसा मिवेतयः । स्तोतव अम्ब्यान्व सृजा इरध्यै सचेन्द्रसानो अव्ये स्वधामिता। गोओपशा गोऋजीक प्रवादौ मनीषा आ त्वा पृथिवी उत द्यौः । मनीषा वसूयया इहाव बृहती इवेति च यथागृहीतम् । योनिमारैगगादारैगारैग् दुर्योण आवृणक् । हन्त्यासद्रुप आरुपित मनायुधास आसता ॥ ८ ॥ १४ ॥

( अथ नवमः खण्डः )

अस्त्वासतो निराविध्यदभ्यादेयं क आसतः । न्यावृणङ् नकिरादेवो न्याविध्यदेन मायुनक् । अहि- हन्तारिणक् पथ आयुच्चाता मुदावता। रिक्थमारैग् यआयुणक् कुरु श्रवण मावृणि । शुनश्चिच्छेपं निदितं नरा वा शंसं पूषणम् । नरा च शंसं दैव्यं ता अनानुपूर्व्यसंहिता । यतो दीर्घस्ततो दीर्घा विवृत्तयो द्विषन्धयस्तूभयतः स्वरः स्वराः । प्राच्य- पञ्चालउपधानिभोदयाः शाकल्यस्य स्थविरस्येतरा स्थितिः ॥ ९ ॥ १५ ॥

॥ इति पार्षदे प्रथमाध्याये द्वितीयं पटलम् ॥

———

## ॥ अथ तृतीयं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः ।
आयामविश्रम्भाक्षेपैस्त उच्यन्तेऽक्षराश्रयाः ।
एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वा ।
अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत् ।
उदात्तं वोच्यते किञ्चित् स्वरितं वाक्षरं परम् ।
उदात्तपूर्वं स्वरित मनुदात्तं पदेऽक्षरम् ।
अतोऽन्यत्स्वरितं स्वारं जात्य माचक्षते पदे ।
उभाभ्यान्तु परं विन्द्यात् ताभ्या मुदात्त मक्षरम् ।
अनेक मप्यनुदात्तं न चेत्पूर्वं तथागतात् ॥१॥१६॥

( अथ द्वितीयः खण्डः )

उदात्तवत्येकीभाव मुदात्तं मध्य मक्षरम् ।
अनुदात्तोदये पुनः स्वरितं स्वरितोपधे ।
इकारयोश्च प्रश्लेषे क्षैप्राभिनिहितेषु च ।
उदात्तपूर्वरूपेषु शाकल्यस्यैव माचरेत् ।
माण्डूकेयस्य सर्वेषु प्रश्लिष्टेषु तथा स्मरेत् ।
इत्येकीभाविनो धर्माः परैः प्रथमभाविनः ।

उदात्तपूर्वं नियतं विवृत्त्या व्यञ्जनेन वा ।
स्वर्यतेऽन्तर्हितं न चेदुदात्तस्वरितोदयम् ।
वैवृत्ततैरोव्यञ्जनौ क्षैप्राभिनिहितौ च तान् ।
प्रश्लिष्टं च यथासन्धिः स्वरानाचक्षते पृथक् ॥२॥१७॥

( अथ तृतीयः खण्डः )

स्वरितादनुदात्तानां परेषां प्रचयः स्वरः ।
उदात्तश्रुतितां यात्येकं द्वे बहूनि वा ।
केचित्त्वेक मनेकं वा नियच्छन्त्यन्ततोऽक्षरम् ।
आवशेषान्नियुक्तं तूदात्तं स्वरितोदयम् ।
नियमं कारणादेके प्रचयस्वरधर्मवत् ।
प्रचयस्वर आचारः शाकल्यान्यतरे ययोः ।
परिग्रहे त्वनार्षान्तात्तेन वैकाक्षरीकृतात् ।
परेषां न्यसमाचारं व्याडिस्तौ चैत् स्वरौ परौ ।
यथा सन्धीयमानाना मनेकीभवतां स्वरः ।
उपदिष्टस्तथा विद्यादक्षराणा मवग्रहे ॥३॥१८॥

( अथ चतुर्थः खण्डः )

पद्यादींस्तु ह्युदात्ताना मसंहितवदुत्तरान् ।
जात्यवद्वा तथा वान्त्यौ तनूशचीतिपूर्वयोः ।
चिमाचयोरुत्तरयोरन्यापि प्रचयस्वरे ।
माचान्यस्ततरैकेषा मुभे व्याडिः समे स्वरे ।

असन्दिग्धान् स्वरान् ब्रूयादविकृष्टानकम्पितान् ।
स्वरितं नातिनिर्हन्यात् पूर्वौ तानि त्रिवर्त्तयेत् ।
जात्योऽभिनिहितश्चैव क्षैप्रः प्रश्लिष्ट एव च ।
एते स्वराः प्रकम्पन्ते यत्रोच्चस्वरितोदयाः ॥४॥१९॥

॥ इति पार्षदे प्रथमाध्याये तृतीयं पटलम् ॥

---

## ॥ अथ चतुर्थं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

स्पर्शाः पूर्वे व्यञ्जनान्युत्तराण्यास्थापिता नाम वशङ्गमं तत् । घोषवत्पराः प्रथमास्तृतीयान्स्वानुत्तमानुत्तमेषूदयेषु । सर्वैः प्रथमैरुपधीयमानः शकारः शाकल्यपितुश्छकारम् । पदान्तैस्तैरेव तृतीयभूतैस्तेषां चतुर्थानुदयो हकारः । विस्थाने स्पर्श उदये मकारः सर्वेषा मेवोदयस्योत्तमं स्वम् । अन्तस्थासु रेफवर्जं परासुतान्तां पदादिष्वनुनासिकान्तु । तथा नकार उदये लकारे जकारं शकारचकार वर्गयोः । तकारो जकारलकारयोस्तौ तालव्य घोष उदये चकारम् । छकारं तयोरुदयः शकारो

न शाकल्यस्य ता वशङ्गमानि । रेफोष्मणोरुदयो-र्मकारो ऽनुस्वारं तत्परिपन्न माहुः ॥ १ ॥ २० ॥

( अथ द्वितीयः खण्डः )

ङकारे घोषोष्मपरेऽन्तरैके ककारं टकारनकारयोस्तु । आहुः सकारोदययोस्तकारं ञकारे शकारपरे चकारम् । तेऽन्तःपादा अकृतसंहितानामूष्मान्तानां पटलेऽस्मिन्विधानम् । चित्कम्भने नोष्मलोपः ककुम्मान् सम्राट् शब्दः परिपन्नापवादः । विसर्जनीय आकारमरेफी घोषवत्परः । ओकारं ह्रस्वपूर्वस्तौ सन्धी नियतप्रश्लिष्टौ । सर्वोपधस्तु स्वरघोषवत्परो रेफं रेफी ते पुना रेफसन्धयः । रेफोदयो लुप्यते द्राघितोपधाह्रस्वस्याकाममनिपाता उभाविमौ । अघोषे रेफ्यरेफी चोष्माणं स्पर्शं उत्तरे । तत्तत् स्थान मनूष्मपरे तमेवोष्माण मूष्मणि ॥२,२१

( अथ तृतीयः खण्डः )

प्रथमोत्तमवर्गीये स्पर्शे वोष्मणि चानते । व्यापन्न ऊष्मसन्धिः स विक्रान्तः प्राकृतोपधः । ऊष्मण्यघोषे लुप्यते परे नतेऽपि सोऽन्वक्षरसन्धिवक्रः । अवग्रावृत्तिः कखपफेषु विवृत्ती रेफं स्वरूः-पूर्घोषेष्ववग्रहे । नाद्या इन्दुः मूधितीवाह एव

भूम्याददेऽह्नोभिरुषर्वसूयवः। आवर्त्तमोऽह्नोराचाख्य-द्योपितो प्रचेता राजन्वर्त्तनीरहेति च। यथा-दिष्टं नामिपूर्वः षकारं सकार मन्यो रिफितः ककारे। पकारे च प्रत्ययेऽन्तःपदन्तु सर्वत्रैवो-पाचरितः ससन्धिः। अन्तःपादं विगृहेऽकारपूर्वः पतिशब्दे द्व्यचरे पुंस्प्रवादे। करं कृतं कृधि करत्करि-त्यपि परेषु पादान्तगते परीति च ॥ ३ ॥ २२ ॥

( अथ चतुर्थः खण्डः )

असोन्तो रेफवतः पारशब्दे परि कृतानि कर-तीति चैषु। अपादान्तीयेष्वपि प्रत्ययेषु वास्तो-रित्येतत्पतिशब्द उत्तरे। आविर्हविर्ज्योतिरित्युत्त-रश्चेत्ककारोऽथोपान्तपश्यन्तिशब्दौ। इळायागा नमसो देवयु द्रुहो मातुरिळस्तानि पदप्रवादे। पूर्वः पुरः पूरिति पूर्वपद्यान् पदानि चापोद्य नवैतदेवम्। अस्या यः सोमो बृहतोऽस्य पूर्व्या ऊरुज्योतिर्जात-द्भूभो वृधोऽन्यः। ब्रह्मणो द्वे ऋतावर्त्तो विदुर्वसुः पशुरेतानि कविशब्द उत्तरे। पथिशब्दे जिन्वथश्चेत् तथो महः पृथुशब्दे विश्वतो वीळितो रजः। काम-पोषपूर्ङ्शब्देषु रायः पदादिरन्तश्च दिवस्परीति च। दिवस्पृथिव्या अश्व यश्च दीष्टपूर्वं पादादौ यदि सम्म-दीष्ट ॥ ४ ॥ २३ ॥

( अथ पञ्चमः खण्डः )

शवसो महः सहस इळायाः पात्वित्येकं पुत्र-शब्दे पराणि। रायस्त्वा महस्करथो महस्परं निष्कृ-त्यादं निष्कृथ निष्पिपर्त्तन। कबन्धं पृथु कण्वासः पुत्रः पातु पथा पयः। पायुः पृष्टं पदं तेषां प्रवाद उदये दिवः। रजसस्पात्वन्तस्पथाः कस्कावत्याचतुर-स्करः। स्वादुष्किल निदस्पातु द्यौष्पितर्वसतिष्कृता। तपोष्पवित्रं त्रिष्पूत्वी धीष्पीपाय विभिष्पितातात्। द्यौष्पिता रजसस्पृष्टौदुष्पज्ज्ञाय नस्करः। वसु-ष्कुविन्मनुष्पिता पितुष्पिता पितुष्परि। प्रयस्पुरो मयस्करं नभस्पयस्त्वयस्परः ॥ ५ ॥ २४ ॥

( अथ षष्ठः खण्डः )

नकार आकारोपधः पद्यान्तोऽपि स्वरोदयः। लुप्यते ऽज्ञान् जगृसानान् जघन्वान् हितदेवहूत-मान्। बद्बधानाँ इन्द्रसोमाँ स्तृषाणा नो देव-देवान्। हन्त देवाँ इति चैता आन् पदाः पद-वृत्तयः। विवृत्त्यभिप्रायेषु च पिबो अन्नाँ रयि-व्यधः। दधन्वाँ योजुजुर्वाँ यः स्ववाँ यातु तद्वाँ चेति। ऋतं योनौ वचोभिर्यान्युवन्यून् वनिषीष्टेति। ईकारोकारोपहितो रेफ मेषु स्वरेषु च। दस्यूँ रेको

नृ॒ँरभि च ते स्पर्शरेफसन्धयः। नास्मानुपैतावान् स्फुरान् गच्छान् देवानयाड्वान्। हिरण्यचक्रा-न्मायावान् घोषांस्तानश्विना विद्वान्। पश्व-श्वान्पुत्रानाधेह्यायजहीयान् पतीनुरोः। चरति चक्रो चमसांश्च वोचिश्चरसि च्यौत्नश्चतुरश्विकि-त्वान्। एतेषु सर्वत्र विसर्जनीयवद्दीर्घोपधोऽस्माच्चम-सान् पशून्। तांस्ते सर्वांस्तान् देवांस्त्वन्तांचाय स्वावदंस्त्वञ्च। विसर्जनीयं परेष्विति ते च स्पर्शोष्म-सन्धयः। नॄँःपतिभ्यो नॄँःप्रणेत्रं नॄँःपात्रं स्वतवाँः पायुः। सन्धिविक्रान्त एवैष नॄँःपाहि शृणुधीति च। नकारस्य लोपरेफोष्मभावे पूर्वं तत्स्थाना-दनुनासिकः स्वरः। आदिस्वरश्चोत्तरेषां परेऽपि मांस्पचन्या मांश्चत्वे मांश्चतोश्च ॥ ६ ॥२५ ॥

( अथ सप्तमः खण्डः )

ईमित्यन्तलोप एषूदयेषु गर्भं गावो वत्सं मृजन्ति पृच्यते। सखायो विव्याच पुना रिणन्ति रथ मित्यन्वक्षरसन्धिरेव सः। पुरुपृथ्वधिपूर्वेषु शकार उपजायते। क्रत्वे च पूर्वपद्यान्ते चन्द्रशब्दे परेऽन्तरा। परीत्ति पदे क्रपरे क्रकारो क्नेति रेफः सदशब्द उत्तरे। परिष्कृण्वन्ति वेधसो स्कृतोभर्स

शौद्धाक्षराः सन्धय एत उक्ताः। मेधातिथौ वरु-
णान्तव्रतान्तौ स्पर्शान्तस्था प्रत्ययौ निर्हृसेते।
आदित्या देवा वरुणा सुरेति येत्यादिषु वय मित्यच
मित्रा। यासु प्रतीकं निष्णातं पुरोहितिः चचं
दाशतिः शवसा भिषज्यथः। सोचिन्वगस्त्ये दशमे च
मण्डले सान्वीयते षः पलिक्नीर्हविषस्तव। जुगुत्सतो
दुदुत्सन् गा अदुदुत्सन्वृधेऽस्य दुत्सतानुदक्षि। दत्सन्न
पत्मन्दत्सुषोऽभिदत्सत् कृष्णासो दक्षि हि यानस्य
दक्षोः ॥ ७ ॥ २६ ॥

॥ इति पार्षदे प्रथमाध्याये चतुर्थं पटलम् ॥

---

॥ अथ पञ्चमं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

अन्तःपादं नाम्युपधः सकारः षकार मप्यूष्म-
परे यथोक्तम्। अन्यैरेकारान्नतिरत्र पूर्वा ततो
व्यापत्तिर्भवतीति विद्यात्। सुतीनकिस्वैर्वृत्रहनह्य-
सिषी निहिते सन्ध्यक्षरेणैव सत्स्यः। सवक्षत्सरेण
पदादयश्च स्प्रीतिस्कितिस्त्रित्यरेफस्य च स्मिति। एका-

रेणापि स्विनितः परं चेद् दीर्घो नस्त्पृचनास्पर्श-पूर्वम्। तकारवर्गस्तु टकारवर्गं मन्तःपादस्थोऽपि षकारपूर्वः। सितां सधस्तात् स्वनिहित स्तवाम स्तुवे स्तुवन्ति स्तुहि सीं स्तुत स्थ। साहित स्तुपस्त्विसत् सत्स्वनीति स्तोभेत्यादिश्चापि बह्वृचरान्तैः। निप-रीति स्वसीत्यादि चकारवर्गीयोदयौ। टकारे योत्तरे परान् सेससीति स्वरोदये ॥ १ ॥ २८ ॥

( अथ द्वितीयः खण्डः )

सेध स्थापय सस्वजे सस्वजाते ससाद च। सन्तं सन्तः सन्ति पूर्वाः स्युः स्याः स्यादिति चोत्तरः। हिषिञ्च तूषिञ्च रजः सुषीदन्नितोषिञ्च ताभिषतः किमुष्वित्। सूरिभिः ष्याम दिधिषन्तु केष्वप्रतिस्फुर-चीषधस्याक मुष्वित्। उषुवाणो दिविषन् सूरिभिः ष्या मृक्षन् तिष्ठन् ष्ठिरं वंसु षीदति। तुषप्रहिष्ठो यशसा महीषा विषा भूयामोषु यतिष्ठेनेति च। वाजी स्तुतो वहन्ति सीम्पतिः स्यां दित्ससि स्तुतः। अपो सुम्यच सुधि सुचि स्म स्तुहि स्तुहीति नः। युग्मान्तस्था दन्त्यमूलीयपूर्वैरन्तःपदं नास्यतेऽन्तः-पदस्थैः। अन्यपूर्वैरपि पद्यादिभाक् सन्नेकाररेफ-पृतनोपधश्च ॥ २ ॥ २९ ॥

( अथ तृतीयः खण्डः )

रेफकारकारपरः प्रकृत्या संस्कृक् स्वृसर्स्वरिति चाचराणाम्। सेति चास्य परिपन्नोपधा चेत् संयोगस्य चाप्यनुनासिकादेः। सहस्रं सनिता स्याचां सावित्रं सूवरी सुषे। समुद्रं सदृशा सारे सायकः साधनी सह। सनितः स्पष्टः सदृशः सखायं सम्रेरेते सानुशब्दश्च पाद्याः। सुते सोमे वचणां प्राभिचर्षणिः स्वभिष्टीत्येव मुपधाश्च सर्वे। अभिसत्वा रयिस्थानो वासिसीष्टाः सिसक्ति च। तिस्तिरे तिस्तिराणा च सिसिचे सिसिचुश्च न। गोष्ठादिव गोषुतमा उपष्टुत्सप्रवादो नार्षदः पर्यषस्वजत्। स्वादुषं सदः पुरुषन्तिशब्दः सुषं सदं सुषमिधानुसेषिधत् ॥ ३ ॥ ३० ॥

( अथ चतुर्थः खण्डः )

तकारे पूर्वपद्यान्तो व्यापन्नो रेफसंहिते। नामि पूर्वो विग्रहे तु त्वात इत्यनुदात्तयोः। अग्निरेकाचरस्यादौ नकिश्चाथो तनूष्विति। तन्नतन्युस्ततचुस्तं तौग्र्य मित्युत्तरेषु निः। पायुभिः पतृभिस्त्रिभिर्दात्वेद्यमायुः शुचिः। उत्तरेत्वनितीयुष्टे वावृधष्टेसधिष्ट ष। गोभिष्टरेम क्रतुष्टं नाहुर्निष्पिध्वरीः प्रभोः। वन्दारुः षष्टिराविस्त्रिर्बाक्षोरित्यनुदात्तयोः।

ऋकाररेफषकारा नकारं समानपदेऽवग्रह्ये नमन्ति। अन्तःपदस्थ मकारपूर्वा अपि सम्थ्या: सन्ध्या ऊष्माप्य-निङ्गे ॥ ४ ॥ ३१ ॥

( अथ पञ्चमः खण्डः )

न मध्यमैः स्पर्शवर्गैर्व्यवेतं परि प्र ऋषीन्द्रादिषु चोत्तमेन। तथा सकारशकारव्यवेतं सर्वादिषु पूर्वपदान्तगश्च। नाभिर्निर्भिक्प्रवादादौ यकारः स्पर्शसंहितम्। कर्मनिष्ठान् दीर्घनीथे भानुशब्दं हिनोमि च। क्रस्वादयं त्वेषपूर्वे वमादिषु तृशुम्न-युष्मादिषु चोभयोदयम्। अहकारेष्वधिकचाय-रेषु च पुनःपुनर्दुश्चतुर्ज्योतिरादिषु। उस्रयाम्णो ऽनुश्रयाम्णो सुषाम्णो वृषमण्यबोधिषयण्या प्रण्यः। दूढ्य दूणाश दूळभप्रवादा दुर्दूधूतमचरं तेषु न चि। अव्यवेतं विग्रहे विघ्नकृघ्नी रेफोष्मणौ सर्वपूर्वौ यथो-क्रम्। आनीन्नु त्यन्नोनुवुर्नोनुमश्च नयत्यर्थश्च प्रप-रीतिपूर्वे ॥ ५ ॥ ३२ ॥

( अथ षष्ठः खण्डः )

पुरुप्रिया ब्रह्मसुतेषि तेषि प्लुताकारान्तं सष-कार मिन्द्र। नते सुष्मेति सवनेषु पर्षि स्वरर्यमा प्रोरुपरीति तैर्नः। हेळो मुञ्चतं मित्राय राया पूषा

ऽगध्यविषश्छकारवत् । नव्येभिस्त्मने वाजान् कृणोत
हिनय प्रतरं परेषु न। गोरोहेन निर्गमाणीन्द्र
एणा इन्द्र एणां स्वर्णपरा नुदस्व। अग्ने रवेणा वार्णा
शक्र एणा मेषाणानतिर्दन्त्यमूर्द्धन्यभावः ॥ ६ ॥ ३३ ॥

॥ इति पार्षदे प्रथमाध्याये पञ्चमं पटलम् ॥

---

## ॥ अथ पार्षदे षष्ठं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

स्वरानुस्वारोपहितो द्विरुच्यते संयोगादिः सक्रमो विक्रमे सन्। सोष्मा तु पूर्वेण सहोच्यते सकृत् स्वेनासंयोगादिरपिश्छकारः। परं रेफात् स्पर्श एवं लकाराटूष्मणो वा नावसितं न रेफः। वोष्मासंयुक्तोऽनुपधो न तूष्मा स्वरोष्मपरो नपरक्रमोपधा। सहातिहाय पवमान यस्य द्वे तने चेत्युपहितः पदादिः। छकारो दीर्घेण चनेतिवर्जं संयुक्तं तु व्यञ्जनं शाकलेन। पदान्तीयो ह्रस्वपूर्वो ङकारो नकारश्चकार मत उत्तरे स्वरे। अनादेशे पटले ऽस्मिन् विधानं सर्वत्र विद्यादपि वैकृतानाम्। अभि-

निधानं कृतसंहितानां स्पर्शान्तस्थाना मपवाद्य रेफम्। संधारणं संवरणं श्रुतेश्च स्पर्शोदयाना मपि वावसाने ॥ १ ॥ ३४ ॥

( अथ द्वितीयः खण्डः )

अन्तस्था स्वे स्वे च परेऽपि रक्ता लकार उष्मस्वपि शाकलेन। सकारे चैव मुदये ककारः क्वातेर्व्वातो-प्सातेर्वा पकारः। पादान्तीया यरवोष्मोदयाश्च स्पर्शाः पदादिष्ववरे मकारात्। असंयुक्तं शाकलं तन्न पद्योऽस्युत्तरे वा त्वनेकाक्षरान्त्याः। सर्वत्रैके करण-स्थानभेदे वा शाकलप्रथमे स्पर्शवर्गे। स्पर्शा यमा-ननुनासिकाः स्वान् परेषु स्पर्शेष्वनुनासिकेषु। न स्पर्शस्योष्मप्रकृतेः प्रतीयाद्यमापत्तिं नाभिविधान-भावम्। यमः प्रकृत्यैव यदृक् श्रुतिर्वा यमेन मुख्यास्ति-समानकाला। अनन्यस्तु प्रकृतेः प्रकृत्यर्थेन संयोगं स्वरभक्तिर्विहन्ति। यमान्नासिक्याः स्वरभक्तिरुत्तरा गार्ग्यस्योष्मासोष्मणो वर्जयेत्तम् ॥ २ ॥ ३५ ॥

( अथ तृतीयः खण्डः )

नादः परोऽभिनिधानाद् ध्रुवं तत्तत्कालस्थान-मश्रुतिस्त्वघोषात्। नासिकास्थान मनुनासिकाश्चे-दन्तस्थायाः पूर्वसरूप मेव। व्याडिः सर्वत्राभि-

निधानलोपः परक्रमे स्वररेफोपधेन। सवर्णपूर्वस्य सहन्नवस्य विपर्ययो न्नवशिष्टे परेषाम्। रेफात् स्वरोपहिताद् व्यञ्जनोदयाद्रकारवर्णा स्वरभक्ति-रुत्तरा। विच्छेदात् स्पर्शोष्मपराश्च घोषिणो द्राघी-यसी तूष्मपरे नराक्रमे। सर्वत्रैके स्वरभक्तेरभाव रेफोपधा मपरे विद्यमानाम्। अक्रान्लोष्मप्रत्ययाभाव मेके पूर्वोत्तरस्वरसरूपताञ्च। ऊष्मोदय प्रथम स्पर्श मेके द्वितीय माहुरपदान्तभाजम्। क्खातौ खकार-ककारा उएके तावेव ख्यातिसदृशेषु नामसु॥३॥३६

॥ इति पार्षदे प्रथमेऽध्याये षष्ठं पटलम् ॥

॥ इति प्रथमोऽध्यायः ॥

---

## ॥ अथ द्वितीयाध्याये प्रथमं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

दीर्घं ह्रस्वो व्यञ्जने ऽन्यस्त्वृकाराद्यथादिष्टं सामवशः ससन्धिः। सैव प्लुतिर्या स्वरेषूपदिष्टा योनिमारैगादिषु चोभयादेः। मच्चित्युकारः प्लवते सर्वश्चाथ पदान्तभाक्। सुतायाहीत्यतोऽन्येषु पदेष्वच्छेति विग्रहे। अनाकारोपधस्त्वान्तो येत्युत्तरपदस्य यः। उदात्तादेर्द्व्यक्षरस्य नास्येति व्यञ्जनोपधः। नियूयपिष्टतमयाभिपद्य प्रास्य संगत्यानुदृश्याभिवृत्य। आरभ्य सम्मील्य मच्चुङ्गमाभिरभिवृग्य यत्र निषद्य वीति च। न हि जग्ध्यभिवीर्येण कृधीतिकृणुथेति च। एतान्येकाक्षरे पदे चैप्रीभाव्ये पराणि च॥ १ ॥

( अथ द्वितीयः खण्डः )

युद्ध्व मन्दस्व विद्मेति हीति विद्धि पिबत्विति। जुहोत यज धासथ शिशीत भरेति क्ष्विति। सु नु हीत्येतेषु परेष्वधेति त्वमर्त्येन मुञ्चताद्येति वीति। सु न्वित्यनर्थपरयोरुकारः पदं तयोरुत्तरयोर्जघेति। मृळयन्नग्नां वसुवित्तमं यत्सोमं जातवेदसम्। भरतेत्येतेष्वपादान्तोऽद्येति करणादिषु। करणञ्च चित्करते वृणीमहे भवन्तं कृणोतु भवतः स्वस्तये।

पुर्विंति चित्पुरुहूतो नृषूतः सहस्राणि पुरुभुजा धियायते। वहेति त्वं दुहितर्दैव्य मुत्तरं द्युम्नं रुद्रं नव्य मेतेषु वर्द्धय। चिन्महित्वं गीर्गृणानः सतेपरं न्वित्यन्त्ये चेन्मर्त्तशब्दाद्रिवः परे ॥ २ ॥

( अथ तृतीयः खण्डः )

तूतुजानो मतिभिर्भोजनानि नोदद्धि स्तोमं भूरि योनिं त्व मेषु। भरेत्येतन्ननु चिद्यो भवेति स्तोतृभ्यो द्युम्नी शतमे परेषु। शोचायविष्ठ्यै वा यथा कर्त्तायत् सादयासम। अर्चामरुद्भ्य स्तिष्ठानः सनास्वः पारयानव्यः। बोधास्तोत्रे चकृमाब्रह्मवाहः शंसागोषू ष्वाादुहित वंदातना। अजानष्टं जम्भयाता अधा-मह्नो गन्तामा युत्वाहि सृजावनस्पते। अग्ने रक्षाण स्तिष्ठाहिरण्ययं सोतावरेण्यं शोचामरुद्वृधः। शिक्षा-स्तोतृभ्यो भूमाचिवन्धुरः पिबामधूनां सोतापरीति च। सत्व मिमित्व दधिष्व वसिषव श्रोत सुनोत हिनोत पुनात। विद्म जगृह्म ररम्भ ववन्म क्षाम सुपप्तनि मन्थत मत्स्व ॥ ३ ॥

( अथ चतुर्थः खण्डः )

सर रद रण जिन्व धारयार्ष क्षर यज यच्छ दर्शस्व साध सेध। तप रुज मृळ वर्ध्द यावयाच

अवय नमस्य विदाष्ट कृष्व जोष। शृणुधि शृणुत यन्त यच्छत स्तव सिम गूहत कुत्र मोषथ। दिधृत पचत वृश्च विध्यताथ मदथात्त यदीत पाथन। उपागत्या खखलीकृत्य वव्राजा विष्टनो रुष्य। दूष्कर्त्ते-ळिष्व ममृज्य विभये यर्त्त तच्छतम्। सार्द्धमन्द्रा-दिभिः प्लुतैः पादादौ व्यञ्जनोदयम्। न्वेववर्जन्नसंयोगे शेषे चापठिते सति। वद्ध शुम्भे रुजयः सेध राजन् वह हव्यानि यदि मेधयामनि। विद्म दातार मध धारया धय दधते विश्वं पुरुवा ऽर्चं गाय॥ ४॥

( अथ पञ्चमः खण्डः )

वहवायो पिबमध्वः पुरुविद्वान् पुरुविश्वा न्यध-वायुं पुरुशस्त। यदिमृत्यो रधजिह्वा पुरुविश्वा पिबशुद्धं पिबराये वहकुत्सम्। भरद्वाजे ऽर्च-देवाय यदिवा पुरुदाशुषे। वहशुष्णायाधवह्व धयत् पुरुहीति न। कृधीतिपरेषु सहस्रसाभ्यिं जरित्रेन इति तत्रेति चान्ये। सहस्रेन सुश्रवसं पवस्वद्वेनो अधीत्येतेषु परेषु तेन। देवं वेनं केत मित्युत्तरेषु दधातेति श्रुधि वंस्वेति नःपरे। वेदेति विश्वस्य भूमं न उत्तरं शुनःशेपे च प्लवते यकारे। ब्रह्मेति नो द्वे च गिरः कृणोति ते कृणोत तूतो दितिचोत्तरेषु।

अभीति नो नु नवन्ते सतोनरं ह्वासत् खिल्याग्ने-ऽर्षपरे तु मुखेग्र ॥ ५ ॥

( अथ षष्ठः खण्डः )

चक्रुर्वदेती दशग्वन्तसमुद्रो रथेन सः सप्तऋषीन् मदन्ति। ते वोभयं ते नियुद्भिः कृपीटं रथस्य सोमस्य मती रणन्ति। समुद्रं हे स्वर्णा नवग्वशब्दो दशग्वं दंसिष्ठ वेसूनि नो वसु। वृचं निर्द्धनु यतिभ्यः सहन्तः पृथिव्यां निर्हंसि समत्सु पावक। यचेति चक्रुरादिषु नरः सुपर्णा इति च। समुद्रादिषु येनेति तचेति मे सदोरथम्। अवेति नो नु कल्पेषु नूनं वाजेषु पृत्सुषु। आद्ये चेद्वाजयुं पार्ये क मग्ने मघचन् परे। राखापितः शतेनानो वर्द्धस्वासु श्रुधीहवम्। मन्दस्वासु वहस्वासु वनेमाते नहीनुवः ॥ ६ ॥

( अथ सप्तमः खण्डः )

पाथादिवो धातारयिं सृजतागयसाधनम्। राखाचोरुन मग्धीनः सृजतामधुमत्तमम्। जही-चिकित्वो वेत्याहि रत्नथान हतामखम्। युयो-ताशरुं खेमाहि वनेमाररिमावयम्। प्रप्रावोअस्मे धामाह समाज्योतिरपावृधि। ऋध्यामाते वाम-

देव्यं जुहोतामधुमत्तमम्। यत्त्वामहे धिष्वाश्वो जनिष्वादेववीतये। अधात्वं ह्यव्याद्यश्वश्वः सच-स्वानःस्वस्तये ॥ ७ ॥

॥ इति पार्षदे द्वितीयस्य प्रथमं पटलम् ॥ १ ॥ ७ ॥

---

## ॥ अथ द्वितीयाध्याये द्वितीयं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

अन्तःपादं विग्रह एष्वपृक्त उकारो व्रजस्य सुधा नमोभिः। शुचिं पवित्रं तु महीर्नुचाप्नुतं सुतस्येति यद्युदयो दयान। सोमसुतिं चर्किराम स्तवाम स्तवाना गृभाय रथं ग्रुधीति। तेअस्ति तेमहिमनः प्रवोचत प्रवोचं नःसुमना द्वैपदाश्च। महे दधिध्वं तिर मुञ्च नो मृधस्वर नमध्वं नमयन्ते नयन्त। खिल्येतेष्वेकाक्षरयोः पराणि चेदुपेन्द्राग्ने चाध्वर मायुरेत्विति। सदेत्येतद्योनिषु पीतयेपरं धन्वे-त्येतत्सोमराट्पूयमानः। यदीतिकृतो मनसः कवीनां सबन्धवो गोः सरमेति तेषु। चरेति पुष्टिं सोमः चर्षणिप्रा जनिमेतिहन्ति संजातवेदा। रन्ध-

येति येषु कं शासदुत्तरं ननःकारेष्वित्युपसातये परे ॥ १ ॥ ८ ॥

( अथ द्वितीयः खण्डः )

मह्याच जय काव्येन गूर्द्धय भरेति च स्वरिति-प्रत्यये षट्। मद पर्ष पिपृत धन्व यच्छत रुहेमेति स्वस्तय उत्तराणि। दधिम मदत तन्वि सिञ्चत स्तव वदता नजर चतो चत। पिपृत पृणत पृच्छत प्रुष स्थ घ ह्निवाय जुहोत पश्यत। चक्रमा कुच भूभ स्म शिशीत स्तोत पमत। यथोदयानि सर्वाणि त्विति चैकाक्षरोपधम्। कदा हरिवो वरुणस्य चक्रतुः सूर्यस्य निष्ठ्या इव भूमेत्येषु न। वस्त्राणि हि बाबधे यज्ञियानां तेदंसोद्दे नः सच शक्र तेषु तु। चक्रमेति द्वैपदे भूरिदुष्कृतं वर्द्धतां विप्रवचसो जिह्वयेति। काण्वायना निष्कृती रेतयोः स्थ जाताः सुरथा हवन-श्रुतस्व ॥ २ ॥ ९ ॥

( अथ तृतीयः खण्डः )

स वा परङ्केति न कौत्सवैमदं स्वराशिमित्या-दिषु न प्रतिष्म च। स्मते परेषु व्रजनं वनस्पते शुभे परुष्णां स्म पुरा वृषाकपौ। राशिं वाजेषु मे सद्म पूषणं तं त्वं हृद्वायि मा दुर्हणायतः।

यस्मै यद् वृत्रहत्येषु मावते वातो ऽयं यस्य मर्दुग्रभी-
यसे । पृच्छा विपश्चित मवा पुरन्ध्या द्यावत्वद्रिग्
वीरान् वनुयामा त्वोता: । जनया दैव्यं भुजेमा
तनूभिर्हविहतो वासया मन्मना च । विदावसुधितिं
रोमा पृथिव्या वोचासुतेषु धावनासुहस्त्य: । मुञ्चा-
सुषुवुष: स्वप्ना पितूना मिहावृणीष्व बोधयापुरन्धिम् ।
अवथास: कृणुथासुप्रतीकं तिराशचीभि: कृणुता-
सुरत्नान् । ग्मन्तानहुषो नयतावियन्त: स्वाच्यावयं
नीरयावृष्टिमन्तम् ॥ ३ ॥ १० ॥

( अथ चतुर्थ: खण्ड: )

असृजता मातरं सूरथंहुवे नयतावह्नं स्वापया-
मिथूदृशा । इतोजयता गतासर्वतातय ईरयथा-
मरुतो नेषथासुगम् । अन्यचाचित् पिबतामुञ्जने-
जनं घास्या वोचेमाविदथेष्विताधियम् । इतानि
यचावि दशस्यथाक्रिविं चाबोधाति द्रावयात्वं
किरावसु । हापदेव कर्त्तनाश्रुष्टिं योधयाच जग्रभा-
वाचम् । पाययाच तर्पयाकामं गातुयाच मन्दया-
गोभि: । घास्याला देनासुमतिं वोचानु व्यथया-
मन्युम् । तेथाव चक्राजरसं भवताम्ऋयन्तस्य ।

एवाचन भजाराये ररिमाते भजाभूरि। श्रूधीन उभयचाते भजात्वं मृळयानस्त्र ॥ ४ ॥ ११ ॥

( अथ पञ्चमः खण्डः )

एकादशद्वादशिनोर्लघावष्टममक्षरम्। उदये संहिताकाले नकारे च गुरावपि। दशमश्चैतयोरेवं षष्ठञ्चाष्टाक्षरेऽक्षरम्। वूहैः सम्प्रत्समीच्योनेत्तैप्रवर्गैकभाविनाम्। नवावृधन्तमर्त्तस्यावद्यानि जिघांससि। सासह्याम ववृत्याम दीदिह्यष्टम मूर्गुहि। पुरुप्रजा तस्याभिनः क्रगुहि द्व्यक्षरोपधम्। हर्यश्वोतभवन्विन्द्र सदनायास्ति नामाचित्। चमसाँइवाव्रि वसवान द्वादशिनः सृजास्य विमदस्य। सुमुखाय धारय ददातु रक्षधिया दधातु दिधिषिय ॥ ५ ॥ १२ ॥

( अथ षष्ठः खण्डः )

अङ्ग सरस्वति पञ्च चरन्ति म्नाभिरिहेन्वसि रण्यसि धाव। विह्विषुणो ऽभिषतः सुविताय त्वासमिधान दधीमहि देव। जामिषु जामु चिकेत किरासि स्वस्युप पात्यसि सोम शतस्य। आयुषि चेतति विष्टपि मास्व प्रोश्मसि मूर्द्धनि सद्म चरन्त। प्रदिवि वरुण तमसि तिरसि घृतमिव दिवे मम

हि नु विशः। उषसि पृथिवि रजसि वहसि हनति पितरि वि विहि नि मधु। सहस्राणि श्रोमतेना सनाम च्छायामिवे षण्यसि सस्तु पाहि। गोपीथ्याय पवमानो वसन्तात् सख्याय वोचेमहि मानुषस्य। आव्य भूमेति पादान्तौ व्यञ्जनेषु श्रुधीहवम्। सद्मा होता स्वासनेमि धर्मासं भूषतारथः॥ ६ ॥ १२ ॥

॥ इति पार्षदे द्वितीयाध्याये द्वितीयं पटलम् ॥ २।८॥

---

## ॥ अथ द्वितीयाध्याये तृतीयं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

सर्वंच पूर्वपदान्ताः प्लवन्ते वसुमघयोः परयोरवे तु वि। विश्व विभ्व धन्व रथन्तिंशचु द्युम्न यज्ञेषु सह तौ प्र चाप्नुते। सहप्रवादा उदयास्तमान्ताः पर्यभ्यपापीति वृतावृवर्णे। अभीवर्त्तः सूयवसो रथीतमः पुरूतमो ऽनन्तरई्च्च उत्तमः। कवर्दु धान्य मिथु चर्षणि स्तेन पिबेति सर्वंच पथोदयश्च। त्विष्युक्थेष्वेता उदये मकारे पर्युवंच्चेत्यमकारेऽनुनासिके। पिचत्र माहिना कृषिभङ्गुरास्व विश्वदेव्य भेषज तुग्र पस्त्य। सुम्नर्त्तारातीत्युदये वकारे वैभ्वादयश्च पृश-

नादयस्तु। यकारे ऽराति कवि सुक्रतु स्वधि पितु सुम्न रय्यृतास्चेति चैते। नत्वश्व सुम्नर्त्तं वृषेति पद्या एकाचरा उदये यकारे ॥ १ ॥ १४ ॥

( अथ द्वितीयः खण्डः )

पृश्नाजिरर्जुं मधु पुत्रि जनि क्रतु वल्गु बन्धुर वृकाङ्कु दम। वृजिनाध्वरीषु वृष मध्य सखि स्तभु दुच्छुना घ यवि शत्रु वसु। वैभु क्रादुनि पुष्ट पर्वताहुति शुभ्र हृदयामति सह वृष्ण्य शक्ति। सप्ति स्वधिति कृशन वयुनसां घृणि हित धित विषु सुतर्विय नीथ। नर्त्तवाके नाश्ववित्सुम्नयन्ता वसु प्रसु वहानो ऽभिवावृते। परिवृतं नाभिवृत्याश्ववच्च पादान्ते सर्वत्र परे मघस्य। अश्वयूपाथाश्वयुजोऽश्वयोगाः सहवाहः सुम्नयन्तर्त्तयन्त। सहवसु सहवत्सर्त्तयुक्तिं सहवीरं वयुनवच्चकार। सुम्नायुर्जुह्व ऋतायन्नृतायु मुग्रादेवं दक्षिणावा नृतायोः। वृषारवाप सूमयं शतावन्नपीजुवा परीवृतो ऽनपावृत् ॥ २ ॥ १५ ॥

( अथ तृतीयः खण्डः )

इन्द्रावतः सोमावती मवायती दीर्घाधियो मित्रायुधो रथीतरः। अन्नावृधं विश्वापुषं वसू-

जुवं विश्वाभुवे यज्ञायते घृतावृता सुम्नायन्नि-न्निचायुव ऋषीवो देवावान् दिवः। एवा वदस्व चेचासा मृतान्वे सदनासदे। पदेष्वन्तरनिंग्येषु प्लुतिः पद्येषु चोत्तरा। वृषस्व वन्य वृध्वांसं वाता वातु वंनो वृतुः। वृते वृषाणा वृषाणो वृजे वभ्रि मृजु मृषुः। मृजे मृजीत वानैषां वमेति सहशा-दिषु। सहेत्यादिः पूर्वपदोपधः सन्नेकाचरचर्षणि-धन्ववर्जम्। न तु पादस्याष्टिनोऽन्तङ्गतस्य न द्वाद-शिनो न भिमातिपूर्वः ॥ ३ ॥ १६ ॥

( अथ चतुर्थः खण्डः )

अभिमातिनृपृतनोपधस्तु सर्वत्र परे प्लवते यकारे। आवयादीना मुदयास्त्रिवर्णाः पदैकदेशा इति तान् प्रतीयात्। आवय यावय च्यावय यामय रामय मामह वावस। द्रावय दादह वावृध तातृष सासह रारपे। आद्यक्षरं प्लुतं तेषा मनन्वित्यस्य मध्यमम्। द्विवर्णः प्रत्ययोऽन्त्यस्य प्रवादाः षडितः परं। दूणाश उक्थशासश्चेकारान्तश्च दाधृषिः। पादान्ते ऽपद्यः सादन मर्द्धस्थान्ते तु पूरुषः। दोषा मस्मै राजतो ऽक्रान् वनस्पतीन् महीयमानान कति

तुभ्य मेभ्यः। उषास मित्युत्तरं सर्वदेश्यं पादस्य चैकादशिनो यद्वन्ते ॥ ४ ॥ १७ ॥

( अथ पञ्चमः खण्डः )

यवयु ररमयः ससाह्विषि वद्वधन्तो रमयागिरा ररभ्म। यवयसि तत्षाणा मोषति अवयन्तो दद्दह्न्तते नृषह्ये। अवयतं वाजसातौ नृषह्ये विभ्वासहं दूणाशा रोचनानि। न तत्षाणो यमयोररपृशे पुरुषीणां यवयन्त्विदवश्च। ररच यवयस्तेनं ससाहे यवया वधम्। परमया द्रवयन्त अवयन्नरते च न। साह्वांसो वः सचासाहं सादन्यं सत्यं तातान। नानाम श्रूयाः शुश्रूया रीषन्तं गातू यन्तीव। वावर्त्तयेषां रीषतो ऽदकारे सान्त्यभि नृषाह मपूरुषघ्नः। सान्तिगुहा तन्वं रीरिषीष्ट जानिपूर्व्यो ऽभीवृतेव अथाय ॥ ५ ॥ १८ ॥

( अथ षष्ठः खण्डः )

साहन् साह्वा जर्हृषन्त प्रसाहं नक्तोषासा सूर्य मुषास मग्निम्। परिरापः सूनृते जारयन्ती शुश्रूयातं यूयुविः सादनाते। करन्त्सुषाह्वा घृतश्चान्ति साह्वानृजूयेव सूयवसाहृषाय। उषासानक्ता पृथुजाघने च राध्येभी रीरिषित ग्नावयन्ति। अध्वा-

नयद्रीरिषत् प्रातर्णोभी रथीयती वाद्‌मायः ससाह्वे। सासाह्व यूयुधिरिवाश्वथायः पूरुषघ्नं रीरिषः पुरुषादः। अपूरुषं जाह्नषाणेन रीषत ऋतावायुभी रथीनां साह्विषीमहि। पवीतारः कियात्ये पूरुषत्वत ऋतावरीरिव हव्यानि गामय। वृषायस्व प्रसवीता ससाह्विषि तातृषाण तातृपिं साद्नस्पृशः। साह्वामे यान्ति पश्रुमानित जागृधुः पवीतारं सूर्यमुषासमीमहे ॥ ६ ॥ १८ ॥

॥ इति पार्षदे द्वितीयस्य तृतीयं पटलम् ॥ ३ ॥ ८ ॥

---

## ॥ अथ द्वितीयाध्याये चतुर्थं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

क्रमो द्वाभ्या मभिक्रम्य प्रत्यादायोत्तरं तयोः।
उत्तरेणोपसन्दध्यात्तथार्द्धर्चं समापयेत्।
एकवर्ण मनोकारं नतेसुस्त्वेति नःपरे।
पदेन च व्यवेतं यत् पदं तच्च व्यवायि च।
ईं लुप्तान्तं प्लुतादीनि स्कम्भनेनेति लुप्तवत्।
इतोषिस्वता वर्त्तमः पूर्वे द्वैपद्योर्द्वयोः।
स्वसार मस्कृतेत्युभे परं वीरास एतन।

अतीत्यैतान्यवन्यन्ति प्लुतादिप्रभृतीनि च ।
पूर्वोत्तरकृतं रूपं प्रत्यादानावसानयोः ।
न ब्रूयात् सर्वमेवान्यद् यथासंहितमाचरेत् ॥ १ ॥ २० ॥

( अथ द्वितीयः खण्डः )

अवग्रह्याण्यतिक्रम्य सहेतिकरणानि च ।
धत्ति धुत्ति प्रवादौ च विकृतादौ प्लुतादि च ।
अन्तःपदञ्च येषां स्याद्विकारोऽनन्यकारितः ।
एतानि परिगृह्णीयाद्बहुमध्यगतानि च ।
अर्धर्चान्त्यञ्च नाकारं प्रागतोऽननुनासिकम् ।
प्रत्यादायैव तं ब्रूयादुत्तरेण पुनः सह ।
उपस्थितं सेतिकरणं केवलन्तु पदं स्थितम् ।
तत्स्थितोपस्थितं नाम यत्रोभे आह संहिते ।
अदृष्टवर्णे प्रथमे चोदकः स्यात् प्रदर्शकः ।
एतदिष्टं समासान्तं पुनर्वचन इङ्गयेत् ॥ २ ॥ २१ ॥

( अथ तृतीयः खण्डः )

इतिपूर्वेषु सन्धानं पूर्वैः स्वः स्यादसंहितम् ।
तदवग्रहवद् ब्रूयात् सन्धिर्नाईर्चयोर्भवेत् ।
दृष्टक्रमत्वात् समयात् सन्ध्यात् सर्वशः क्रमे ।
पदेन च पदाभ्याञ्च प्रागवस्येदतीत्य च ।
नकारस्योष्मवद्वृत्तं प्लुतोपाचरिते नतिः ।

प्रश्लेषस्य प्रगृह्यस्य प्रकृत्याः स्युः परिग्रहे ।
शौद्वाक्षरागमो ऽपैति न्यायं यान्त्युत्तरे त्रयः ।
रिफितान्युष्मणो ऽघोषे दूभावस्त्वधितीव च ॥ ३ ॥ २२ ॥

॥ इति पार्षदे द्वितीयस्य चतुर्थं पटलम् ॥ ४ ॥ १० ॥

---

## ॥ अथ द्वितीयध्याये पञ्चमं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

अथार्ध्यलोपेन यदाह स क्रमः समानकालं पदसंहितं द्वयोः । अथो बहूना मविलोपकारणाः परैरवस्यन्त्यतिगस्य कानिचित् । अपृक्त मेकाक्षर मद्वियोनि यत् तदानुनासिक्यभयादतीयते । नतञ्च पूर्वेण परस्य कारणं नतेः परस्योभयहेतुसंग्रहात् । परीत इत्युत्तर मेतयोर्द्वयोः परं हि पूर्वो नमतीत्यतीयते । ततोऽपरे सन्धा मवेक्ष्य कारणं तदर्थज द्विक्रम मत्र कुर्वते । तमःपरं रेफनिमित्तसंशयात् तथावरित्येतदपोद्यते पदम् । अदोपितोसोचिदुषर्वसूयवो नश्चि धश्चि धुक्षीत्यपि चाति यन्ति किम् । स्वसार मित्येतदपोद्यते पदं परः सकारोपजनोऽस्कृतेति च । निरस्कृतेति ह्युपसर्गकारितस्तदन्व-

याद्‌ाचरितन्तु पञ्चभिः। सहेति चेमेति च रक्त- संहितं गुणागमादेतन भाविचेतन। पदञ्च चास्क- म्भचिदित्यतः परं प्लुतादि चैतानि निमित्तसंश- यात्॥ १ ॥ २३ ॥

( अथ द्वितीयः खण्डः )

द्व्यभिक्रमं पूर्वनिमित्तमानिन स्त्रिषूत्तमेष्वाहु- रनन्तरं हि तत्। अनन्तरन्त्वेव चतुर्थषष्ठयोः परं कथं तत्र च न द्व्यभिक्रमम्। अनानुपूर्व्ये पद- सम्धग्रदर्शनात् पदव्यवेतञ्च पदव्यवायि च। ततो ऽपरे द्विक्रम माहुराश्रयात् कृताविलुप्तात्त्र हि वर्ण- संहिता। पदानुपूर्व्येण सपूर्व्य आगत स्ततो व्यवेतञ्च सहव्यवायि च। ततो निराहेतरयोश्च ते पदे ततो व्यवेतेन परस्य संहिता। अनन्तरे त्रिक्रमकारणे यदि त्रिभिश्च गार्ग्यः पुनरेव च त्रिभिः। त्रिसङ्क्रमे पञ्चभिराष्य्ंनुग्रह श्चतुःक्रमस्त्वाचरितोऽत्र शाकलैः। अलोपभावादपरे बहुक्रमं प्रतिस्व मार्षीति न कुर्वते क्वचित्। असर्वशस्त्रिप्रभृतिष्वनेकशः स्मरन्ति सङ्ख्यानियमेन शाकलम्। अयावने पूर्वविधान माचरेद्यथापदं सन्धि मपेतहेतुषु। अथो पदाभ्यां समयं पदेन च क्रमेष्ववस्येदधिगम्य सन्दधत्॥२॥२४॥

( अथ तृतीयः खण्डः )

सहेतिकाराणि समासमन्तभाग् बहुक्रमे मध्य-गतानि यानि च। तृतीयतां गच्छति यस्य चोष्मवानन्ययोगं विकृतं प्लुतादि च। अतीत्य तेषां पदतां प्रदर्शयेत् कृते तु गार्ग्यस्य पुनस्त्वभि-क्रमे। अदृष्टवर्णो प्रथमे प्रदर्शनं स्मरन्ति तं तत्र निराह चोदकः। पदं यदा केवल माह सा स्थितिर्यदेति-कारान्त मुपस्थितं तदा। अथो विपर्यस्य समस्य चाहते यदा स्थितोपस्थित माचरन्त्वत। पुन र्ब्रुवंस्तत्र समास मिङ्गयेत् स्वरित्यतोऽनेष्वु च सन्धि माचरेत्। अवग्रहस्येत्र हि कालधारणा परिग्रहे स्तीत्युपधेत्यनु-स्मृता। अभिक्रमेतोभयतोऽनुसंहितं ततोऽस्य पश्चात्पदतां प्रदर्शयेत्। यथापदं चान्यतरेण सन्दधत् त्रिषूत्तमेष्वे तदलोपसम्भवात्। अरत्नसंध्येत्यपवाद्यते पदं पुनस्तदुक्त्वाध्यवसाय पूर्ववत्। तथा यदृच्छोपनते बहुक्रमे क्रमेत तस्यैकपदानि निःसृजन्॥ ३ ॥ २५ ॥

( अथ चतुर्थः खण्डः )

नकारलोपोष्मरभाव मानये दपेतरागां प्रकृतिं परिग्रहे। नतिं प्लुतोपाचरिते च यत्र च प्रगृह्य मेकीभवति स्वरोदयम्। प्रवादिनौ दूणाश दूढ्य

दूलभान् परेष्वघोषेषु च रेफ मूष्मणः। महाप्रदेशं स्वधितीव चानयेन्नुदेच्च शौद्धाद्धरसम्भ्र मागमम्। अभिक्रमे पूर्वविधान माचरेत् पुनर्नुवंस्तूत्तरकारितं क्रमे। विकार मन्यद्वदतोऽनुसंहितं तदाचरेदन्तगताद्ययोस्तु न। सकृद्यथासंहित मेषु चाचरेत् पुनर्विवच्चन् पद मप्यसन्दधत्। परिग्रहे सन्धिषु कारणान्वया दविक्रमं ह्रूष्ममु चोष्मसन्धिषु। समानकालावसमानकारणावनन्तरौ वा यदि सन्निगच्छतः। पदस्य दोषावथ हेत्वसंग्रहे नियुक्त मार्ध्यन्यतरेण लुप्यते। मकारलोपे विकृतस्वरोपधे तृतीयभावे प्रथमस्य च ध्रुवम्। विपर्ययो वेतरथाभ्युपेयुषा मथोभयेषा मनुनासिकोदये। अथो न तेनोपहितेऽनुनासिके तथाच्चरस्य क्रम एकपातिनः। न चाच पूर्वः स्वरितेन संहितां लभेत तस्मिन्नियतः स्वरोदये ॥ ४ ॥ २६ ॥

( अथ पञ्चमः खण्डः )

यदा च गच्छत्यनुदात्त मचरं वशम्प दादेरुदयस्य तेन च। उदात्तपूर्वे नियतः स्वरोदये परो विलोपो नियतो यदावरः। स्वरैकदेशं स्वरितस्य चोत्तरं यदा निहन्या दनिमित्त मचरम्। उदात्तपूर्वो

ऽप्यनुदात्तसङ्गमो यदा स्वरौ द्वौ लभते ऽपिवा बहून्। यथा प्रक्रमे स्वरवर्णसंहिते तयोस्तयो रत्नरवर्णयोस्तथा। अदर्शनेनार्ष्यविलोप दृश्यते क्रमेष्वनार्षं ब्रुवते ऽपरे स्वरम्। अदृष्ट मार्ष्यं यदि दृश्यते क्रमे विलोप मेवं ब्रुवते ऽपरे तथा। सकारणान्यार्ष्यविलोपविक्रमः क्रमेण युक्तोऽपि बहूनि सन्दधत्। पदं पदान्तश्च यथा न गच्छति स्वरावसानं स तु योऽत्र युज्यते। तदा न रूपं लभते निराकृतं न चेन्निराह्वोपनिवृत्य तत्पदम्। स्थितस्थितोपस्थितयोश्च दृश्यते पदं यथावद्द्वयवद् द्वुपस्थितम्। क्वचित् स्थितौ चैव मतोऽधिशाकलाः क्रमे स्थितोपस्थित माचरन्त्युत ॥ ५ ॥ २७ ॥

( अथ षष्ठः खण्डः )

क्रमेत सर्वाणि पदानि निर्ब्रुवन्निति स्मरन्त्याचरितं तु नोन्नयेत्। क्रमस्य वर्त्मस्मृतिसम्भवौ ब्रुवन् समाधि मस्वान्वितराणि कीर्त्तयेत्। यथोपदिष्टं क्रमशास्त्र मादितः पुनः पृथक्त्वै र्विविधैर्न साधुवत्। इति प्रबाभव्य उवाच च क्रमं क्रमप्रवक्ता प्रथमं शशंस च। क्रमेण नार्थः पदसंहिताविदः पुरा प्रसिद्धाश्रय पूर्वसिद्धिभिः। अकृत्स्नसिद्धिश्च न चान्य-

साधको न चोदयापायकरो न च श्रुतः। असिद्धितः सिद्धिविपर्ययो यदि प्रसिद्धितोऽसिद्धिविपर्ययस्तथा। सहापवादेषु च सत्सु न क्रमः प्रदेशशास्त्रेषु भवत्यनर्थकः। विपर्ययाच्छास्त्रसमाधिदर्शनात् पुराप्रसिद्धेरुभयोरनाश्रयात्। समभ्युपेयाद् बहुभिश्च साधुभिः श्रुतेश्च सन्मानकरः क्रमोऽर्थवान्। ऋतेन च द्वैपदसंहितास्वरौ प्रसिद्धितः पारणकर्मचोत्तमम्। क्रमादतोऽप्यृग्यजुषां च बृंहणं पदैः स्वरैश्चाध्ययनं यथा त्रिभिः॥ ६ ॥ २८ ॥

॥ इति पार्षदे द्वितीयस्य पञ्चमं पटलम् ॥ ५ ॥ ११ ॥

---

॥ अथ द्वितीयाध्याये षष्ठं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

ऊष्मान्तस्थसोष्मचकारवर्गा नान्तं यान्त्यन्यच्च विसर्जनीयात्। ऋकारल्कारौ पर मर्द्ध सूष्मां नादिं तकारादवरे च सप्त। नान्योन्येन मध्यमा स्पर्शवर्गाः संयुज्यन्ते न लकारेण रेफः। स्पर्शैर्वकारो नपरै रनुत्तमै स्तथा तेषां घोषिणः सर्वथोष्मभिः। नान्त्यान्तस्थान प्रथमोष्मभिः परैर्न

रेफो रेफेण न सोष्मणोष्मवान्। न स्पर्शैरूष्मा प्रथमः परः सन्नानुत्तमैः स च सोष्मा च पूर्वः। नानुत्तमाघोषिणो ऽघोषिभिः सह स्पर्शैः स्पर्शा नोत्तमा ऊष्मभिः परैः। लकारस्पर्शैर्न यकार उत्तरै रूष्माणोऽन्योऽन्येन च नक्पदेष्विदम् ॥ १ ॥ २८ ॥

( अथ द्वितीयः खण्डः )

नामाख्यात मुपसर्गो निपातश्चत्वार्याहुः पदजातानि शाब्दाः। तन्नाम येनाभिदधाति सत्त्वं तदाख्यातं येन भावं स धातुम्। प्राभ्यापरानिर्दुरनुव्युपापसम्परिप्रतिन्यत्यधिसूदवापि। उपसर्गा विंशतिरर्थवाचकाः सहेतराभ्या मितरे निपाताः। विंशते रुपसर्गाणा मुक्ता एकाक्षरा नव। आद्युदात्ता दशैतेषा मन्तोदात्तस्त्वभीत्ययम्। क्रियावाचक माख्यात मुपसर्गो विशेषकृत्। सत्त्वाभिधायकं नाम निपातः पादपूरणः। निपाताना मर्थवशान्निपातनादनर्थकाना मितरे च सार्थकाः। नेयन्त इत्यस्ति संख्येह वाङ्मये मिताक्षरे चाप्यमिताक्षरे च ये * ॥ २ ॥ ३० ॥

॥ इति पार्षदे द्वितीयाध्याये षष्ठं पटलम् ॥ ६ ॥ १२ ॥

॥ इति द्वितीयोऽध्यायः ॥

* "नो अत्र इत्यस्ति संख्येह वाङ्मये मिताक्षरेणाह च शाकटायनः"—इति घ।

## ॥ अथ तृतीयाध्याये प्रथमं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

वायुः प्राणः कोष्ठ्य मनुप्रदानं कण्ठस्य खे विवृते संवृते वा । आपद्यते श्वासतां नादतां वा वक्त्रीहायामुभयं वान्तरोभौ । ता वर्णानां प्रकृतयो भवन्ति श्वासोऽघोषाणामितरेषां तु नादः । सोष्मोष्मणां घोषिणां श्वासनादौ तेषां स्थानं प्रतिनादात्तदुक्तम् । तद्विशेषः कारणं स्पृष्ट मस्थितं दुस्पृष्टं तु प्राग्घकाराच्चतुर्णाम् । स्वरानुस्वारोष्मणा मस्पृष्टं स्थितं नैके कण्ठस्थ स्थित माङ्रूष्मणः । प्रयोक्तुरीहा गुणसन्निपाते वर्णाभवन् गुणविशेषयोगात् । एकश्रुतीः कर्मणाप्नोति बह्वी रेके वर्णाञ्छाश्वतिकान् न कार्यान् । आहुर्घोषं घोषवता मकार मेकेऽनुस्वार मनुनासिकानाम् । सोष्मतां च सोष्मणा मूष्मणाहुः सस्थानेन घोषिणां घोषिणैव ॥ १ ॥

( अथ द्वितीयः खण्डः )

अचोत्पन्नावपरे ऊष्मघोषौ शीघ्रतरं सोष्ममसुप्राण मेके । रक्तो वर्णो मुखनासिकाभ्या मेतद्वर्णात्मगुणशास्त्र माहुः । नपुंसकं यदूष्मान्तं तस्य बह्वभिधानजः । अनुस्वारो दीर्घपूर्वः सिध्यंतेषु पदेषु सः ।

सः सासौ सं पदान्तेभ्यः पूर्वौ नाम्युपधस्तथा। यकारो वा वकारो वा पुरस्ताच्चेदसन्धिजः। जिघांसन् पांसुरे मांसं पुमांसं पौंस्य मित्यपि। पदेष्वेवं प्रवादेषु ना मकार उपोत्तमे। प्रश्लिष्टादभिनिहितान्मांस्त्वेयांस मित्यपि। एतावानृत्त्वनुस्वारो दीर्घादितरथेतरः ॥ २ ॥

( अथ तृतीयः खण्डः )

समापाद्यान्युत्तरे षट् पकारे राधो रथो ग्ना दिवो जा ऋतस्य। अञ्जःपा दुःप्रेति च पूर्वपद्यावनिङ्गयन्विक्रम मेषु कुयात्। समापाद्यं नाम वदन्ति षत्वं तथा णत्वं सामवशांश्च सन्धीन्। उपाचारं लक्षणतश्च सिद्ध माचार्या व्याडिशाकल्यगार्ग्याः। ह्रस्वामर्द्धस्वरभक्त्या ऽसमाप्ता मनुस्वारस्योपधा माहुरेके। अनुस्वारं तावतैवाधिकं च ह्रस्वोपधं दीर्घपूर्वं तदूनम्। रेफोस्त्यृकारस्य परस्य चार्द्धं पूर्वं ह्रसीयांस्तु नवेतरस्मात्। मध्ये स तस्यैव लकारभावे यौ तौ स्वरः कल्पयताव्लृकारः ॥ ३ ॥

( अथ चतुर्थः खण्डः )

अनन्तस्थं त मनुस्वार माहुर्व्याडिर्नासिक्य मनुनासिकं वा। सन्ध्यानि सन्ध्यक्षराण्याहुरेके द्वि-

स्थानतैतेषु तथोभयेषु। सन्ध्येष्वकारोऽर्द्ध मिकार उत्तरं युजोरुकार इति शाकटायनः। मात्रा-संसर्गादवरे पृथक्श्रुती ह्रस्वानुस्वारव्यतिषङ्गवत् परे। त्रीणि मन्द्रं मध्यम मुत्तमञ्च स्थानान्याहुः सप्त यमानि वाचः। अनन्तरश्चात्र यमोऽविशेषः सप्त स्वरा ये यमास्ते पृथग्वा। तिस्रो वृत्तीरुपदि-शन्ति वाचो विलम्बितां मध्यमाञ्च द्रुताञ्च। वृत्त्य-न्तरे कर्मविशेष माहुर्मात्राविशेषः प्रतिवृत्त्युपैति। अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्। शिष्याणा मुपदेशार्थे कुर्याद्वृत्तिं विलम्बिताम्। चाषस्तु वदते मात्रां द्वे मात्रे वायसो ऽब्रवीत्। शिखी त्रिमात्रो विज्ञेय एष मात्रापरिग्रहः ॥ ४ ॥

॥ इति पार्षदे तृतीयस्य प्रथमं पटलम् ॥ १ ॥ १३ ॥

---

## ॥ अथ तृतीयाध्याये द्वितीयं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

समुद्दिष्टा वर्णगुणाः पुरस्तान्निर्दिष्टानां सांहितो यस्य धर्मः। तदायापायव्यथनानि दोषास्तान् व्याख्या-स्यामो ऽत्र निदर्शनाय। निरस्तं स्थानव्यापकर्षे

विहारसंहारयोर्ग्रासपीडे। ओष्ठाभ्या मंवृतत माह नद्धं दुष्टं मुखेन सुषिरेण शूनम्। सन्दष्टं तु व्रीडन आह हन्वोः प्रकर्षेण तदु विक्लिष्ट माहुः। जिह्वामूलनिग्रहे ग्रस्त मेतन्नासिकयोस्त्वनुषंगे ऽनुनासिकम्। अयथामात्रं वचनं स्वराणां सन्दंशो व्यासः पीडनं निरासः। ग्रासः कंठ्ययोरनुनासिकानां सन्दष्टता विषमरागता वा। सान्तस्थाना मादिलोपान्तलोपावदेशे वा वचनं व्यञ्जनस्य। अन्योऽन्येन व्यञ्जनानां विरागो लेशेन वा वचनं पीडनं वा॥ १॥

( अथ द्वितीयः खण्डः )

घोषवता मनु नादः पुरस्तादादिस्थानां क्रियते धारणं वा। सोष्मोष्मणा मनु नादो ऽप्यनादो लोमश्यं च क्ष्वेडन मूष्मणां तु। वर्गेषु जिह्वाग्रथनं चतुर्षु ग्रासो मुख्ये प्रतिहारस्वतुर्थे। सरेफयोर्मध्ययोर्निरासो विक्लेशः स्थाने सकले चतुर्थे। अतिस्पर्शो बर्बरता च रेफे जिह्वान्ताग्राभ्यां * वचनं लकारे। श्वासोऽघोषनिभता वा हकारे निरासोऽन्येषूष्मसु पीडनं वा। स्वरात्परं पूर्वसस्थान माहुर्दीर्घान्निरस्तं तु विसर्जनीयम्। कंठ्याद्यथा रेफवतस्तथाहूरक्तान्नु

* "जिह्वान्ताभ्यां च"–इति क, ग।

नासिक्य मपीतरस्मात्। संयोगादेरूष्मणः पूर्वं माहु-विसर्जनीय मधिकं स्वरोपधात्। परं यमं रक्तपरा-दघोषादूष्माणां वा घोषिणस्तत्प्रयत्नम् ॥ २ ॥

( अथ तृतीयः खण्डः )

शुनश्शेपो निषपी शास्मि निष्षाडविक्रमान् ब्रह्म विष्णुः स्म पृश्निः। स्पर्शोष्मसन्धीन् स्पर्शरेफ-सन्धीनभिप्रायांश्च परिपातयन्ति। स्वरौ कुर्वन्त्योष्ठ्य-निभौ सरेफौ तिस्रो मातॄस्त्रोन्पितॄन्यन्नृभिर्नॄन्। दन्त्यान्तस्कारोपनिभानघोषानृष्यः पृथ्वी पृथिवीळा पृथीति। ऊष्मान्तस्याप्रत्ययं रेफपूर्वं ह्रस्वं लुम्पन्त्याहु-रथाप्यसन्तम्। पुरूषन्ति पुरूवारायं माष्ट्रां हरियोज-नाय हरियूपीयायाम्। ऐयेरित्यैकार मकार माहु-र्वैयश्वे च क्रमयन्तो यकारम्। तदेवान्येषु विपरीत माहुस्तैरय्या वय्यं च हृदय्ययेति। अकारस्थान ऐकार माहुर्लुम्पन्ति च सय मौकार मुत्तरम्। बह्वक्षरं ह्यक्षरतां नयन्ति तथोनयीर्ध्वनयील्कोशयी-रिति ॥ ३ ॥

( अथ चतुर्थः खण्डः )

तदेव चान्यत्र विपर्ययेण कार्यं ऐत्वे सय मौकार माहुः। धातोर्बिभेतेर्जयतेर्नियस्माभैष्म चाजैष्म

नैष्टेति चैषु। ॠकारस्य स्थान ऋकार माहुर्ऌकारं वा चन्द्रनिर्णिक्सुशिल्पे। अनन्तरे तद्विपरीत माहुस्तालव्ये शृङ्गे बिभ्रयाद्विवृत्ताः। तालुस्थानो व्यञ्जनादुत्तरश्चेद्यकारस्तत्र यकार माहुः। शुनश्शेपः शाखि ववर्जुषीणा मत्के विरप्शीति निदर्शनानि। लुम्पन्ति वा सन्त मेवं यकारं ज्यैष्ठ्याय सम्वारन्नापृच्छ्य मृम्वा। व्यवन्त्यन्तमंहतोऽव्यायतं तं दीर्घायुः सूर्यो वृशद्वीत्तं ऊर्जम्। लुम्पन्त्यन्तस्थां क्रमयन्ति वैतां स्वरात्स्थानादवरां परां वा। स्वस्तये ऽधायि भुवनेय मूचू रक्तं ह्रस्वं द्राघयंत्युग्रँ ओकः ॥ ४ ॥

( अथ पञ्चमः खण्डः )

हकारसोष्मोपहिताद्यकाराद्वकाराद्वासवर्णसोष्मोष्मपूर्वात्। तत्सस्थानं पूर्व मूष्माण माहुस्तुच्छ्यान् दघ्रा आपृच्छ्य मृभ्वा ह्वये ह्वः। पकारवर्गोपहिताच्च रक्तादन्यं यमं तद्श्रुताप्नान मौम्नात्। अनुस्वार मुपधां वान्यवर्णां स्वरोपधात्सोष्मयमोदयश्चेत्। तं घ्नन्त्यञ्जमो जङ्घ्नत ईङ्ख्यन्तीः सञ्ज्ञातरूपो ऽथ सञ्ज्ञान मिन्द्रः। सान्तस्थादौ धारयन्तः परक्रमं शर्मन्त्स्यामास्मिंस्सुजनाक्रुधीयतः। रक्तौ रागः समवाये स्वराणां न नूनं नृणां नृमणा नृभिर्न। रक्तात्तु

सोष्मा क्रियते ह्कारो दध्यङ् ह देवान् ह्वते मह्वान् ह्वि। संयोगानां स्वरभक्त्या व्यवायो विक्रमणं क्रमणं वा यथोक्तम्। विपर्ययो वा व्यत तिल्विले ज्मन् द्रप्सो ऽजुषन्त्सार्त्स्यैयोऽष्टाम्प्रनेष्टात् ॥ ५ ॥

( अथ षष्ठः खण्डः )

विवृत्तिषु प्रत्ययादेरदर्शनं यथा याऐच्छस्य यऔशिजस्य। इ उ सन्धौ सन्ध्यवचनं च कासुचित्स इदस्ता कस्त उषो यथैते। समानवर्णासु विपर्ययो वा यथा ह्यूती इन्द्र क आसतस्य। अभिव्यादानस्य विवृत्तिपूर्वं कंठ्ये ता आपोऽवसा एति दीर्घं। न दोषाणां स्वरसंयोगजाना मन्तो गम्यः सङ्ख्ययाथेतरेषाम्। शक्यस्तु शास्त्रादधि साधुधर्मो युक्तेन कृत्स्नः प्रतिपत्तु मस्मात्। अकारस्य करणावस्थयान्यान्स्वरान्ब्रूयात्तद्धि सम्पन्न माहुः। परानकारोदयवद्विवद्येत् सर्वंच वर्णानिति सम्प्रदेषा। शास्त्रापवादात्प्रतिपत्तिभेदान्निन्दन्त्यकृत्स्नेति च वर्णशिचाम्। नैतेन शास्त्रेण विशिष्यतेऽन्यैः कृत्स्नस्य वेदाङ्ग मनिन्द्य मार्षम् ॥ ६ ॥

॥ इति पार्षदे तृतीययस्य द्वितीयं पटलम् ॥ २॥१४॥

## ॥ अथ तृतीयाध्याये तृतीयं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

पारायणं वर्त्तयेद्ब्रह्मचारी गुरुः शिष्येभ्यस्तदनुव्रतेभ्यः। अध्यासीनो दिश मेकां प्रशस्तां प्राची मुदीची मपराजितां वा। एकः श्रोता दक्षिणतो निषीदेद् द्वौ वा भूयांसस्तु यथावकाशम्। तेऽधीहिभो३ इत्यभिचोदयन्ति गुरुं शिष्या उपसंगृह्य सर्वे। स ॐ३ मिति प्रस्वरति त्रिमात्रः प्रस्वारः स्थाने स भवत्युदात्तः। चतुर्मात्रो वाऽपूर्वोऽनुदात्तः षण्मात्रो वा भवति द्विः स्वरः सन्। अध्येतुरध्यापयितुश्च नित्यं स्वर्गद्वारं ब्रह्म वरिष्ठ मेतत्। मुखं स्वाध्यायस्य भवेन्न चैतत्स्यन्दध्यात् स्वाध्यायगतं परेण। प्रचोदितो ऽभि क्रमते यथास्य क्रमः परस्ताद्विहितस्तथैव। सर्वोदात्तं त्विह तस्मिन्नपृक्त मच्चैःप्रयुक्तं द्विरूपस्थितं वा ॥१॥

( अथ द्वितीयः खण्डः )

अभिक्रान्ते द्वैपदे वाधिके वा पूर्वं पदं प्रथमः प्राह शिष्यः। निर्वाच्ये तु भो३ इति चोदना स्यान्निवृत्ता ॐ भो३ इति चाभ्यनुज्ञा। परिपन्नं प्राकृत मूष्मसन्धिं नकारस्य लोपरेफोष्मभावम्। असंयुक्त मृपरं रेफसन्धिं विवृत्ति मित्यत्र निदर्शनानि। प्रत्यु-

च्चार्यैतद्वचनं परस्य शिष्यस्य स्याङ्गो३ इति चोदना वा। अर्द्धर्चोदर्केषु तु वर्जयेयुरध्यायान्तेषूभयथा स्मरन्ति। गुरुः शिष्यस्य पदमाह मुख्यं समासश्चेदसमासो यदि द्वे। एतेन कल्पेन समाप्य प्रश्नं प्रत्याम्नायुस्तं पुनरेव सर्वे। तत ऊर्द्ध्वं सन्ततं संवृतेन प्रविग्रहेण सुविग्रहेण। सर्वोदात्तेन च चर्चयेयुः सर्व इमान्यु-पस्थापयन्तः पदानि ॥ २ ॥

( अथ तृतीयः खण्डः )

अभ्युत्परानिर्व्युपसम्प्रतिप्रन्यत्यध्यपादुःस्वपिपर्य-वानु। आद्यं स्थितोपस्थित मेक मेषा मर्द्धर्चान्ते कुर्युरथो द्विषन्धौ। च घ हि वेति सर्वत्र तेषा मनेकं चेत्सन्निपतेद् द्वितीयम्। समस्यन्तश्च द्विपदाश्चर्चयेयु-र्व्यवस्यन्त * इतराश्चर्चयेयुः। दक्षिणाय प्रथमं प्रश्न माह प्रदक्षिणं तत ऊर्द्ध्वं परीयुः। एवं सर्वे प्रश्नशो-ऽध्याय मुक्त्वोपसंगृह्यातिसृष्टा यथार्थम्। प्रश्नस्तृचः पङ्क्तिषु तु द्वृचो वा द्वे द्वे च पङ्क्तेरधिकाक्षरेषु। एका च सूक्तं समयास्तु गण्याः परावराद्यां द्विपदे यथैका। सूक्तस्य शेषोऽल्पतरो यदि स्यात्पूर्वं स गच्छेद् यदि नु द्वृचो वा। ते षष्टिरध्याय उपाधिका वा सूक्ते समाप्ते

* "द्विपदार्द्धर्चौ व्यवस्यन्त"–इति ख, ग।

यदि ते समाम्नाः। भो३ इत्यर्द्धर्चे गुरुणोक्त आह शिष्य ॐ भो३ इत्युचिता मृचं च। अथैके प्राहुरनुसंहितं तत्पारायणे प्रवचनं प्रशस्तम्॥ ३॥

॥ इति पार्षदे तृतीयस्य तृतीयं पटलम्॥ ३॥१५॥

---

## ॥ अथ तृतीयाध्याये चतुर्थं पटलम् ॥

(तत्रायं प्रथमः खण्डः)

गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापतेः। पङ्क्तिस्त्रिष्टुब् जगती च सप्त च्छन्दांसि तानि ह। अष्टाक्षरप्रभृतीनि चतुर्भूयः परं परम्। दैवान्यपि च सप्तैव सप्त चैवासुराण्यपि। एकोत्तराणि देवानां तान्येवैकाक्षरादधि। एकावमान्यसुराणां ततः पञ्चदशाक्षरात्। तानि त्रीणि समागम्य सनामानि सनाम तत्। एकं भवत्यृषिच्छन्दस्तथा गच्छन्ति सम्पदम्। एवं त्रिप्रकृतीन्याहुर्युक्तानि चतुरुत्तरम्। ऋषिच्छन्दांसि तैः प्रायो मन्त्रश्लोकश्च वर्त्तते॥ १॥

(अथ द्वितीयः खण्डः)

तत्पादो यजुषां छन्दः साम्नां तु द्वावृचां त्रयः।

गायत्र्यादिजगत्यन्त मेकद्वित्र्यधिकं नु तत् । आर्ष-वत्तत्समाहारो ब्राह्मो वर्गः षडुत्तरः । अक्षराणि तु षट्त्रिंशद्गायत्री ब्रह्मणो मता । यजुषां षडृचां त्रिः षट् साम्नां द्वादश सम्पदि । एकोत्तरो यजुर्वर्गः साम्नो वर्गस्तु द्व्युत्तरः । ऋचान्तु त्र्युत्तरो वर्गो ब्राह्मो वर्गः षडुत्तरः । ऋषीणान्तु त्रयो वर्गाः सप्तका एव नेतरे । ऋषिच्छन्दांसि गायत्री सा चतुर्विंशत्यक्षरा । अष्टाक्षरास्त्रयः पादास्त्वारो वा षडक्षराः । इन्द्रः शचीपतिर्बलेन वीळितो दुश्च्यवनो वृषा समत्सु सासहिः ॥ २ ॥

( अथ तृतीयः खण्डः )

पञ्चकाः पञ्च षड् वान्त्यः पदपङ्क्तिर्हि सा भुरिक् । द्वौ वा पादौ चतुष्कश्च षट्कश्चैकस्त्रिपञ्चकाः । अधा-हीन्द्रेति च तृचौ घृत मग्ने त मित्यृचः । अष्टको दशकः सप्तौ विद्वांसाविति सा भुरिक् । युवाकुहीति गायत्री त्रयः सप्ताक्षरा विराट् । सैषा पादनिचृन्नाम गायत्र्यवैकविंशिका । षट्कः सप्तकयोर्मध्ये स्तोतृणां विवाचीति । यस्याः सातिनिचृन्नाम गायत्री द्विदशा-क्षरा । षट्कः सप्तकयोर्मध्ये स्तुष्यासावातिथिं यथा । षडक्षरः प्रकृत्यैष व्यूहेनाष्टाक्षरोऽपि वा ॥ ३ ॥

( अथ चतुर्थः खण्डः )

उत्तरोत्तरिणः पादाः षट् सप्ताष्टाविति त्रयः। गायत्री वर्द्धमानैषा त्व मग्ने यज्ञाना मिति। अष्टकौ मध्यमः षट्क एकैषा मुपदिश्यते। स नो वाजेषु पादौ द्वौ जागतौ द्विपदोच्यते। आद्यान्त्यौ सप्तकौ यस्या मध्ये च दशको भवेत्। यवमध्या तु गायत्री सखुन्व इति दृश्यते। षडक्षरः सप्ताक्षरस्तत एकादशाक्षरः। एषोष्णिग्गर्भा गायत्री ता मे अश्व्यानां मिति। अष्टाविंशत्यक्षरोष्णिक् सा पादैर्वर्त्तते त्रिभिः। पूर्वावष्टाक्षरौ पादौ तृतीयो द्वादशाक्षरः॥ ४ ॥

( अथ पञ्चमः खण्डः )

पुरउष्णिक्तु सा तस्मिन् प्रथमे मध्यमे ककुप्। अग्ने वाजस्य तच्चक्षुः सुदेवः समहेति च। ऋचो निदर्शनायैताः परायास्ता यथोदिताः। सप्ताक्षरैस्त्रिभिर्द्व नदं मंसीमहीति च। पादैरनुष्टुभौ विद्यादक्षरैरुष्णिहाविमे। ददी रेक्णा इति त्वेषा ककुम्न्यङ्कुशिरा निचृत्। एकादशो ऽस्याः प्रथम उत्तमश्चतुरक्षरः। एकादशाक्षरौ च द्वौ मध्ये चैकः षडक्षरः। उष्णिक् पिपीलिकमध्या हरी यस्येति दृश्यते। ताभ्यां परः षडक्षरः प्रया तनुशिरा नाम ॥ ५ ॥

( अथ षष्ठः खण्डः )

आद्यः पञ्चाक्षरः पाद उत्तरे ऽष्टाक्षरास्त्रयः। अनुष्टुब्गर्भेषोष्णिक् सा आगस्त्येऽस्ति पितु न्विति। द्वात्रिंशदक्षरानुष्टुप् चत्वारो ऽष्टाक्षराः समाः। कृतिर्द्वौ द्वादशाक्षरावेकश्चाष्टाक्षरः परः। यस्यास्त्वष्टाक्षरो मध्ये सा पिपीलिकमध्यमा। नवकौ द्वादशौ द्व्यूना ता विद्मसेति काविराट्। तेषा मेकाधिकावन्त्यौ नष्टरूपा विपृक्षामि। दशाक्षरास्त्रयो विराट् त्रयो वैकादशाक्षराः। षण्महापदपङ्क्तिस्तु षट्कोऽन्त्यः पञ्चपञ्चकाः। मा कस्मै पर्यूषु शुध्यग्ने तव स्वादिष्ठा ता ऋचः ॥ ६ ॥

( अथ सप्तमः खण्डः )

चतुष्पदा तु बृहती प्रायः षट्त्रिंशदक्षरा। अष्टाक्षरास्त्रयः पादास्तृतीयो द्वादशाक्षरः। पुरस्ताद्बृहती नाम प्रथमे द्वादशाक्षरे। उपरिष्टाद्बृहत्यन्ते द्वितीये न्यङ्कुसारिणी। स्कन्धोग्रीव्युरोबृहती चेधैनां प्रतिजानते। त्रयो द्वादशका यस्याः सा ह्योर्ध्वबृहती विराट्। महो यो ऽधीन्नतं मत्सीजान मिदजोजनः। अश्विनोर्दशकौ मध्ये विष्टारबृहती युवम्। एकाग-

स्त्ये पितुस्तोमे नवाक्षरपदोत्तमा। द्वयोश्चोपेद माहार्षं सर्वे व्यूहे नवाक्षराः ॥ ७ ॥

( अथ अष्टमः खण्डः )

त्रयोदशाक्षरौ च द्वौ मध्ये चाष्टाक्षरो यदि। अभि वो वीर मित्येषा सा पिपीलिकमध्यमा। नव-काष्टदशसद्दैकः परमोऽष्ट च यदि पादाः। बृहती विषमपदा सासनितः सुसनितश्च। पङ्क्तिरष्टाक्षराः पञ्च चत्वारो दशका विराट्। आदेशे ऽष्टाक्षरौ विद्यात् सोपसर्गेषु नामसु। युग्मावष्टाक्षरौ पादा-वयुजौ द्वादशाक्षरौ। सा सतोबृहती नाम विप-रीता विपर्यये। आस्तारपङ्क्तिरादितः प्रस्तार-पङ्क्तिरन्ततः। संस्तारपङ्क्तिर्मध्यतो विष्टारपंक्तिर्वा-ह्यतः ॥ ८ ॥

( अथ नवमः खण्डः )

मन्ये त्वा मा ते राधांसि य ऋष्व आग्निं मह्नीति च। पितुभृतो नाग्ने तव ता ऋचोऽत्र निद-र्शनम्। चतुश्चत्वारिंशत् त्रिष्टुबक्षराणि चतुष्पदा। एकादशाक्षरैः पादैर्द्वौ चेत्तु द्वादशाक्षरौ। प्रायश्चोप-जगत्येषा परस्यास्य तु सा त्रिष्टुप्। वैराजजागतैः

पादैर्यो * वाचेत्यभिसारिणी। नवको दशको वा स्यादेको ऽनेकोऽपि त्रिष्टुभः। एकादशाक्षरस्यापि विराट्स्थाना ह नाम सा। पूर्वौ दशाक्षरौ पादा उत्तरेऽष्टाक्षरास्त्रयः। विराट्पूर्वा ह नामैषा त्रिष्टुप्पंक्त्युत्तरैव वा ॥ ९ ॥

( अथ दशमः खण्डः )

त्रयश्चैकादशाक्षरा एकश्चाष्टाक्षरः परः। विराड्रूपा ह नामैषा त्रिष्टुप्नाक्षरसम्पदा। त्रयश्च द्वादशाक्षरा एकश्चाष्टाक्षरः क्वचित्। एषा ज्योतिष्मती नाम ततो ज्योतिर्यतो ऽष्टकः। चत्वारो ऽष्टाक्षराः पादा एकश्च द्वादशाक्षरः। सा महाबृहती नाम यवमध्या तु मध्यमे। सो चिन्नु सनेमि शुध्येव क्रीळन्यद्वाग्निनेन्द्रेण। नमो वाकि बृहद्भिश्च ता ऋचोऽत्र निदर्शनम्। पञ्चाशज्जगती ह्यूना चत्वारो द्वादशाक्षराः। तदस्या बहुलं वृत्तं महापङ्क्तिः षड्ष्टकाः। अष्टकौ सप्तकः षट्को दशको नवकश्च वा। महासतोबृहत्यर्द्धे व्यूहयोरेतयोः सह। सम्पाते त्वेति पादान्ते देववान् सप्तविंशके। अस्मा उ षूभे यदिन्द्र सूर्ये

* "वैराजौ जागतौ पादौ यौ"—इति ख, घ।

विष मिति तृचः * । आयः पर्मौ विश्वासां च ता ऋचोऽत्र निदर्शनम् ॥ १० ॥

( अथ एकादशः खण्डः )

द्वावतिच्छन्दसां वर्गा उत्तरौ चतुरुत्तरौ । प्रथमातिजगत्यासां सा द्विपञ्चाशदक्षरा । षट्पञ्चाशत्तु शक्वरी षष्टिरेवातिशक्वरी। उत्तराष्टिचतुःषष्टिस्ततोऽष्टाषष्टिरत्यष्टिः । षट्सप्ततिस्त्वतिधृतिर्धृतिः पूर्वा द्विसप्ततिः। सर्वा दाशतयीष्वेता उत्तरास्तु सुभेषजे। कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिस्तथा। षष्ठी चाभिकृतिर्नाम सप्तम्युत्कृतिरुच्यते। अशीतिश्चतुरशीतिरष्टाशीतिर्द्विनवतिः। षण्णवतिः शतं पूर्णमुत्तमा तु चतुःशतम् ॥ ११ ॥

( अथ द्वादशः खण्डः )

त मिन्द्रं प्रोषु सुषुम चिकद्रुकेष्वया रुचा । सखे च स हि शङ्खस्य मध्यमो वर्ग उच्यते। आसु कृतिस्तु प्रकृतिर्ध्रुवं पूर्वा ततस्तु या। आकृतिर्यदि ते मात्रा मेषो विकृतिरुच्यते। संकृतिस्तु न वै तत्र देवो

---

* "सेहा न उग्रेति षट्"-इति घ।

अग्नि स्त्वभिकृतिः। सर्वस्येत्युत्कृतिस्तच्च तृतीयो वर्ग उच्यते ॥ १२ ॥

॥ इति पार्षदे तृतीयाध्यायस्य चतुर्थं पटलम् ॥४॥१६॥

---

## ॥ अथ तृतीयाध्याये पञ्चमं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

एवं क्लृप्तप्रमाणानां छन्दसा मुपदिश्यते। एकद्व्यूनाधिका सैव निचृदूनाधिका भुरिक्। विराजस्तूत्तरस्याहुर्द्वाभ्यां या त्रिषये स्थिताः। स्वराज एवं पूर्वस्य याः काश्चैवङ्गता ऋचः। याः काश्चिद् बहुपादास्तु * गायत्र्यो हीनतां गताः। अक्षरैर्बहुभिस्तास्तु गायत्र्य उपधारयेत्। ता राट् विराट् स्वराट् सम्राट् स्ववशिनी परमेष्ठी। प्रतिष्ठा प्रत्न ममृतं वृषा शुक्रं जीवं पयः। तृप्त मर्णो ऽशो ऽम्भो ऽम्बु वार्यापस्त्वोदक मुत्तमम्। दैवतं छन्दसा मत्र वक्ष्यते तत उत्तरम्। अग्नेर्गायत्र्यातोऽधि हि भक्त्या दैवत माहृतुः। सप्तानां छन्दसा मृचौ न पङ्क्तिः सा तु वासवी ॥ १ ॥

---

* "बहुरूपास्तु"-इति घ।

( अथ द्वितीयः खण्डः )

प्राजापत्या त्वतिच्छन्दा विच्छन्दा वायुदेवता। द्विपदा पौरुषं छन्दो ब्राह्मी त्वेकपदा स्मृता *। एतेनैव क्रमेणैषां वर्णतो भक्तिरुच्यते। श्वेतञ्च सारङ्गमतः पिशङ्गं कृष्ण मेव च। नीलञ्च लोहितञ्चैव सुवर्ण मिव सप्तमम्। अरुणं श्याम-गौरे च बभ्रुतो नकुलं तथा। पृश्निवर्णं तु वैराजं निचृच्छ्रावं घृषङ्गुरिक्। ब्रह्मसामर्ग्यजुश्छन्दः कपिलं वर्णतः स्मृतम्। मा प्रमा प्रतिमोपमा सम्मा च चतुरक्षरात्। चतुरुत्तर मुद्यन्ति पञ्च च्छन्दांसि तानि ह ॥ २ ॥

( अथ तृतीयः खण्डः )

ह्रषीका सर्षीका मर्षीका सर्वमात्रा विराट्कामा। द्व्यक्षरादीनि मादीनां वैराजान्यनुचक्षते। अक्षराण्येव सर्वत्र निमित्तं बलवत्तरम्। विद्याद् विप्रतिपन्नानां पादवृत्ताक्षरैर्ऋचाम्। व्यूहेदेकाक्षरीभावान् पादेषूनेषु सम्पदि। क्षैप्रवर्णांश्च संयोगान् व्यवेयात् सदृशैः स्वरैः। पदाभेदेन पादानां विभागोऽभिसमीक्ष्य तु। छन्दसः सम्पदं तां तां यां यां मन्येत

---

* क-पुस्तके तु प्राजापत्यादीनि पदानि बहुवचनान्तानि।

पादतः। प्रायोऽर्थो वृत्त मित्येते पादज्ञानस्य हेतवः।
विशेषसन्निपाते तु पूर्वं पूर्वं परम्परम् ॥ ३ ॥

( अथ चतुर्थः खण्डः )

अनुदात्तन्तु पादादौ नो वर्जं विद्यते पदम्। पादादावनुदात्तन्तु यदन्यत्तदिहोदितम्। वशेऽस्तीयत्वसीत्येक माभिष्ट इति च तृचे *। नेति पूर्वाणि सर्वाणि मधुच्छन्दस्यृतावृधौ। स्तोमशब्दे परेऽधायृतशब्दे परे स्विधत्। हुवे तुराणां यत्पूर्वं तृपन्मरुत उत्तरम्। प्रेदं ब्रह्मेति चैतस्मिन् सूक्ते पादोऽस्ति पञ्चमः। सर्वानुदात्तः षट्स्वृक्ष्वादितश्च चतुर्दश। पादौ गायत्रवैराजावष्टाक्षरदशाक्षरौ। एकादशद्वादशिनौ विद्यात् त्रैष्टुभजागतौ ॥ ४ ॥

( अथ पञ्चमः खण्डः )

वर्षिष्ठाणिष्ठयोरेषां लघूपोत्तम मक्षरम्। गुर्वेवेतरयोर्ऋक्षु तद् वृत्तं छन्दसां प्राहुः। एतैश्छन्दांसि वर्त्तन्ते सर्वाण्यन्यैरतोऽल्पशः। एतद्विकारा एवान्ये सर्वे तु प्राकृताः समाः। एका एकपदैतेषां द्वौ पादौ द्विपदोच्यते। ते तु तेनैव प्रोच्येते सरूपे यस्य पादतः। न दाशतय्येकपदा काचिदस्तीति वैयास्कः।

---

* "तृचे चाभिष्ट इत्यपि"—इति ख।

अन्यच्च वैमध्या: * सैकादशिनो मुखतो विराट्। आहुस्त्वेकपदा अन्ये अध्यासानेकपातिनः। अध्यासानपि केचित् त्वाहुरेकपदा इमाः। आवां सुम्ने असिक्न्यां ह्व उरौ देवाः सिसक्तु नः। पादा एकाधिकाः सन्ति छन्दसां चतुरक्षरात् ॥ ५ ॥

( अथ षष्ठः खण्डः )

सन्त्यतिच्छन्दसां पादा एकोत्कर्षेण जागतात्। षोडशाक्षरपर्यन्ता एकश्चाष्टादशाक्षरः। एकादशैव छन्दांसि ये पादाः † षोड़शाक्षराः। सर्वे त्रिकद्रुकीयासु नाकुले ‡ ऽष्टादशाक्षरः। अवमंह्रो ऽविकर्षेण ज्येष्ठा दाशतयीष्वृचाम्। विकर्षेण तु पादैश्च स ह्रि शर्द्ध इति स्मृता। अणिष्ठा बहुपादानां भारद्वाजी पुरुतमम्। अविकर्षेण सौभरी प्रेष्ठ म्वादि क्रसीयसी। विराजो द्विपदाः केचित्सर्वा आहुश्चतुष्पदाः। कृत्वा पञ्चाक्षरान् पादांस्तांस्तथाक्षरपङ्क्तयः ॥ ६ ॥

॥ इति पार्षदे तृतीयाध्यायस्य पञ्चमं पटलम् ॥५॥१८॥

---

* "वैमध्या अन्यच्च"–इति क। † "पादा ये"–इति घ।

‡ "नाकुली"–इति क।

## ॥ अथ तृतीयाध्याये षष्ठं पटलम् ॥

( तत्रायं प्रथमः खण्डः )

बार्हतो बृहतीपूर्वः ककुप्पूर्वस्तु काकुभः। एतौ सतोबृहत्यन्तौ प्रगाथौ भवतो दृचौ। त्व मङ्ग प्र वो यज्ञं मा चिद् बृहदु गायिषे। बार्हताः काकुभाना-हुस्तं गूर्द्धय वयम्भिवति। अनुष्टुब् द्वे च गायत्र्यावेष आनुष्टुभः स्मृतः। विराजावभि सम्पन्नः पद्याच्चर्ये स उत्थितः। आकृतिर्व्यपदेशानां प्राय आदित आदितः। गायत्र्यादिस्तु बार्हते प्रायो गायत्र-बार्हतः। गायत्रकाकुभो नाम प्रायो भवति काकुभे। औष्णिहस्तूष्णिहा पूर्वः पङ्क्त्यन्तः पाङ्क्त-काकुभः ॥ १ ॥

( अथ द्वितीयः खण्डः )

त मिन्द्रञ्च सुनीथश्च य मादित्या स एव च। अदान् मे पौरुकुत्स्यश्च ता ऋचो ऽत्र निदर्शनम्। महासतोबृहत्यन्तो यो महाबृहतीमुखः। स महा-बार्हतो नाम बार्हतो बृहतीमुखः। अथो अतिजग-त्यन्तो यवमध्योत्तरोऽपि च। बृहद्भिस्त्वम्वो नेमिञ्च वामी वामस्य ता ऋचः। न हि ते विपरीतान्तो

मो षु त्वा द्विपदाधिकः। अनुष्टुब् जगती चैव विश्वेषा मिरज्यन्तश्च। द्विपदा बृहती चैव स नो वाजेष्वित्यति स्मृतः। ककुप्पूर्वस्तु को वेद स्मृतः काकुभ बार्हतः ॥ २ ॥

( अथ तृतीयः खण्डः )

आनुष्टुभौष्णिहं विद्यात्तेम आहुर्य आययुः। तेन स्वाध्वं बृहत्यादि बार्हतानुष्टुभः स्मृतः। अग्निं वः पूर्व्यं मित्येषोऽनुष्टुप्पङ्क्तिरेव च। यदभ्रिगावो अभ्रिगू ककुप् च त्रिष्टुबेव च। यदद्य वा मनुष्टुप् च त्रिष्टुप् चैवोपदिश्यते। यत्स्थो दीर्घेति च त्वेषा बृहती त्रिष्टुबेव च। आयन्मावेनास्त्रिष्टुप् च जगती चोपदिश्यते। तावृधन्तावनुष्टुप् च महासतोमुखा विराट्। जागतस्त्वददा अभां प्रगाथस्त्रिष्टु-बुत्तरः। उत्तरस्त्रैष्टुभस्तस्माज्जगत्युत्तर उच्यते॥ ३ ॥

( अथ चतुर्थः खण्डः )

त्व मेतां जन च द्वौ द्वौ स घा राजेति च स्मृतौ। त्व मद्य पारे रजसो जागतौ त्रिष्टुबुत्तरौ। स-व्यञ्जनः सानुस्वारः शुद्धो वापि स्वरोऽक्षरम्। व्यञ्ज-

---

* "महासतोमुखैव च" इति क।

नान्युत्तरस्यैव स्वरस्यान्त्यं तु पूर्वभाक्। विसर्जनीयानुस्वारौ भजेते पूर्व मक्षरम्। संयोगादिश्च वैवं च सहक्रम्यः परक्रमे। गुर्वक्षरं लघु ह्रस्वं न चेत् संयोग उत्तरः। अनुस्वारश्च संयोगं विद्याद्व्यञ्जनसङ्गमम्। गुरु दीर्घं गरीयस्तु यदि सव्यञ्जनं भवेत्। लघु सव्यञ्जनं ह्रस्वं लघीयो व्यञ्जनादृते ॥ ४ ॥

( अथ पञ्चमः खण्डः )

छन्दस्तुरीयेण समानसङ्ख्यया छन्दसोऽन्यस्य भवन्त्यृचोऽन्याः। यावत्तुरीयं भवति स्व मासां तावत्य एता इतरा भवन्ति। द्वाभ्या मवस्येत् त्रिपदासु पूर्वं पादेन पश्चात् क्वचिदन्यथैतत्। मध्येऽवसानं तु चतुष्पदानां त्रिभिः समस्तैरवरैः परैर्वा। पङ्क्त्यां द्विशो वा तत उत्तरेण त्रिभिः परैर्वा विपरीत मेतत्। द्विश स्त्रिशो वा परतश्चतुर्भिः स्यात् षट्पदाना मवसान मेतत्। त्रिभिस्तु पूर्वं तत उत्तरं स्याद् द्विशस्त्रिशो वा यदि वा समस्तम्। द्वाभ्यां पुनः सप्तपदावसानं द्वाभ्यश्च मध्येऽष्टपदासु विद्यात्। अग्नि मीळे इतेरिव गायन्त्येत मधीन्विति। अयं चक्रं नकिष्टश्च नकिर्देवा मिनीमसि ॥ ५ ॥

( अथ षष्ठः खण्डः )

विश्वान् देवान् हवामहे सप्तपो निष्कं मुषुम । न हि वां प्रोषु स हि शर्द्दश्च ता ऋचोऽच निदर्शनम् । द्वाभ्यां पादेन च द्वाभ्यां * तव त्यत्पञ्चपदाष्टिः । अव्यूहेनातिशक्वरी तृतीयः षोड़शाक्षरः । चतुर्भिस्तत एकेनाग्ने त मह्येति च । चतुर्भिस्तु परं द्वाभ्यां तव स्वादिष्ठा तच्छंयोः । भरद्वाजाय तत्रचतुरधीदृचात्तेरिव । एतासु न व्यवस्थन्त्येके द्वादशकादिषु । प्रश्नस्तृचः पङ्क्तिषु तु दृचो वा द्वे द्वे च पङ्क्तेरधिकाक्षरेषु । एका च सूक्तं समयास्तु गण्याः परावराद्व्यां द्विपदे यथैका । सूक्तस्य शेषोऽल्पतरो यदि स्यात् पूर्वं स गच्छेद्यादि नु दृचो वा । ते षष्टिरध्याय उपाधिका वा सूक्ते समाप्ते यदि ते समाप्ताः ॥ ६ ॥

( अथ सप्तमः खण्डः )

सर्वाणि भूतानि मनोगतिश्च स्पर्शाश्च गन्धा रसाश्च सर्वे । शब्दाश्च रूपाणि च सर्वमेतत् त्रिष्टुब्जगत्यौ समुपैति भक्त्या । गुर्वक्षराणां गुरुवृत्ति सर्वं गुर्वक्षरं त्रैष्टुभमेव विद्यात् । लघ्वक्षराणां लघुवृत्ति सर्वं लघ्वक्षरं जागतमेव विद्यात् । यश्छन्दसां

---

* "द्वाभ्यां तु" इति ग ।

वेद विशेष मेतं भूतानि च त्रैष्टुभजागतानि ।
सर्वाणि रूपाणि च भक्तितः सः * स्वर्गं जयत्येभि-
रथामृतत्वं स्वर्गं जयत्येभिरथामृतत्व मिति ॥ ७ ॥

॥ इति पार्षदे† तृतीयाध्यायस्य षष्ठं पटलम्‡ ॥६॥१८॥

॥ इति पार्षदसूत्रं समाप्तम् § ॥

———

* "भक्तितो यः"—इति क ।

† "इति पार्षदे लक्षणग्रन्थे"—इति ख ।

‡ "अष्टादशपटलं समाप्तम्"—इति ग, घ ( आदितः ) ।

§ "समाप्त मेतत् परिशिष्टम्"—इति ख ।